# गीतगौरीवरम्

श्री तिरुमलभट्टविरचितम्

सम्पादकः

गयाचरण त्रिपाठी



श्रीतिरुमलभट्टविरचितम्

# गीतगौरीवरम्

(रागकाव्यम्)



सम्पादकः

**डॉ० गयाचरण त्रिपाठी**




**गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्**

चन्द्रशेखर-आज़ाद उद्यानम्

प्रयाग-२

प्रकाशक -

डॉ० गयाचरण त्रिपाठी, डी०लिट्०
*प्राचार्य*
गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ
चन्द्रशेखर आजाद पार्क
इलाहाबाद-२



मूल्य -

978-93-83135-75-2

अक्षरसंयोजना -
विमर्श-विपिन द्विवेदी

मुद्रक -

अलका कम्प्यूटर्स एण्ड प्रिन्टर्स
१०८/५ छोटा बघाड़ा
इलाहाबाद-२
दूरभाष- ४६७३२०

**RASHTRIYA SANSKRIT SANSTHAN**
**(Under the auspices of the Ministry of H.R.D.)**
**New Delhi**

**Ganganatha Jha Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*Chief Editor*
**Prof. G.C. Tripathi**
Principal



Vol. No. 52

# Gītagaurīvaram

**by**

**Tirumala Bhaṭṭa**

**(A Rāgakāvya dealing with the love union of Śiva and Pārvatī)**



*Edited by*
**Gaya Charan Tripathi**
Principal



**Ganganatha Jha Kendriya Sanskrit Vidyapeetha**
*Chandrashekhar Azad Park*
**Allahabad-211 002**

# राष्ट्रिय-संस्कृत-संस्थानम्

(केन्द्रीय-शिक्षामन्त्रालयस्याङ्गभूतम्)

देहली



## गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठ-ग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी



द्विपञ्चाशत्तमं प्रसूनम्



श्रीतिरुमलभट्टविरचितम्

# ॥ गीतगौरीवरम् ॥

(रागकाव्यम्)

सम्पादकः

डॉ० गयाचरण त्रिपाठी



गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्

प्रयागः

# FOREWORD

I am happy to present before the lovers of Sanskrit poetry the present lyrical work of the poet Tirumala Bhaṭṭa which has been composed on the theme of the love union of Śiva and Pārvatī, the eternal divine couple and the primordial parents of the universe (cf. '*Jagataḥ pitarau*' of Raghuvaṃśa I.1). What the poet describes and highlights here, however, is not the amorous dalliance of the couple, but the painful separation of Pārvatī from her Lord and her craving for union with her beloved husband who is busy with gods and sages etc. bestowing favours upon them or solving their problems, thus looking after the welfare of the world. The *vipralambha* aspect of śṛṅgāra thus fully dominates the *sambhoga* aspect in this Kāvya. Pārvatī is depicted here as newly wedded wife of Śiva who wants to spend as much time as possible in the company of her husband. The poet really excels in delineating the tender feelings of a newly married young lady and the pangs of her love.

The best part of the Kāvya are its lyrics (*gītas*) , 24 in number, which are in the form of *Aṣṭapadīs* ( a poem of eight couplets) composed and set in various *rāgas* of Karnatak music to the accompaniment of appropriate *tālas*. The inspiration behind the texture of composition and the theme of this work has obviously been the Gītagovinda of Jayadeva (early 12[th] c.) of which more than 150 'imitations' are known to exist till this date, and I need not say that none of the later compositions has ever been able to excel, overshadow or surpass the 'original', though many of them are excellent in their own right.

Our Kāvya too exhibits a great command of the poet on the Sanskrit language and its rich vocabulary combined with his exceptional dexterity of handling even extremely long compounds (*samāsas* ). Some of his poetical fancies (*utprekṣās* ) are highly imaginative and delighting, so also his *anuprāsas*. One may perhaps not find it as *sarasa* as the Gītagovindam but still it is a wonderful literary composition surely worth bringing to light and thereby to the notice of the scholars.

The poet Tirumala Bhaṭṭa lived in the second half of the $16^{th}$ century under the patronage of Veṅkaṭa (Veṅkaṭādri), the ruler of Kelaḍi (presently located in the Dist. of Shimoga, Karnataka). He clearly mentions the period of composition of this work as the year 1511 of the Śaka era which corresponds to the year 1589 of the Christian reckoning. The rulers of Kelaḍi were originally the commanders ("Nayakas") of the ever victorious army of the famous Kṛṣṇadeva Rai, the founder of the Vijayanagar empire (1509-1529 A.D.). The estate of Kelaḍi was granted originally to the grandfather of Veṅkaṭādri, named Sadāśiva, who as the valiant commander-in-chief of the army of Kṛṣṇadeva Rai had defeated the huge army of Ibrahim Adil Khan. The rulers of Kelaḍi thereafter enjoyed the estate for a very long time as the loyal vassals of the Vijayanagar empire.

Tirumala was a disciple of Narasiṃha Yati, the Śankaracārya of the Śṛṇgeri Mutt (1576-1600) situated not far from Kelaḍi and surrounded by the river Tungabhadrā. He mentions the name of his Guru with great respect in the closing lines of each Sarga of his work. The poet seems to have been very grateful to his patron Veṅkaṭādri too, whom he refers to not only in each of the concluding (eighth) couplet of all his 24 Aṣṭapadīs, but also extensively in the first Sarga of the Kāvya. He also quotes a verse (I.11) composed by his father Viṣṇubhaṭṭa in the praise of Veṅkaṭādri which shows that his father too was patronised by this king. His description of the royal court of Śiva and of his sleeping chamber which is adorned with the figures of the ladies on stone pillars in various captivating postures (VI.2, X.10 etc.) clearly reflects and re-creates the appearance of the chambers and halls of the royal palace. He must therefore have been an *Āsthāna-paṇḍita* or a *Sabhākavi* having his fixed seat in the court and not just a Pandit receiving financial support from the king. This is also the reason why he glorifies the king at every given occasion in this Kāvya and gives him the title of 'Abhinava-bhoja'. The present Kāvya is not the sole work of Tirumala. In the concluding lines of the Sargas of this Kāvya, he makes a mention of his another work 'Kastūrikāmañjarī', perhaps a *Nāṭikā*, but I must admit that I have not seen it in print or in manuscript form.

The text of this edition is based more or less exclusively on two manuscripts, one preseved in our Vidyapeetha and the other in the *Pustaka*

*Prakash* (Maharaja Mansingh Pustakālaya). Jodhpur for the procurement of a copy of which I am indebted to my friend Dr. Govindram Charora of that city. I am aware of the existence of one or two more MSS of the work , but they remained unaccessible to me. It is thus not a 'critical edition' in the strict sense of the term. but at least a new work is thus being brought to light in a more or less readable form. I do not think that new MSS would alter much of the readings accepted by me.

It was my desire to give detailed editorial notes on the text and also to present to the readers a comprehensive literarary appraisal of the Kāvya but it has unfortunately not been possible due to extreme paucity of time at my disposal at present since I shall be leaving for Germany very soon. I beg pardon of the scholars and hope that some young scholar would undertake it in near future.

Allahabad

*10th September, 2001*

**Gaya Charan Tripathi**

***Principal***

**G.N. Jha Kendriya Sanskrit Vidyapeetha**

# भूमिका

उत्कलप्रान्तार्गतकेन्द्रबिल्वाख्यग्रामनिवासिना श्रीपुरुषोत्तमचरण-कमलचञ्चरीकेण रससिद्धेन महाकविना श्रीजयदेवेन विरचितमलौकिकं किमपि गीतगोविन्दाख्यं काव्यं चिरकालादेव साहित्यसंगीतोभयरसपानलोलुपानां सहृदयानां भगवतद्विलासकलाकुतूहलिनां सरसानां भक्तानां च कण्ठहारायते। 'निरतिशयमार्दवसौष्ठवलालित्यादिगुणसंपन्नमिदं लघुकायात्मकमपि खण्डकाव्यं स्वकीयया विश्वव्यापिन्या कीर्त्या महीयांसि, महनीयानि महाकाव्यान्यपि न्यक्करोति। एतादृगन्यकाव्यरचनानिःश्रेण्याऽनाविलमविभ्रंश्यमुच्चतमं च कीर्तिपदमारोढुं बहुभिः खलु परवर्तिभिः कविभिः प्रायति येनास्य काव्यस्य न्यूनातिन्यूनं पञ्चाशदधिकशतम् अनुकृतयोऽद्य प्राप्यन्ते, यासु काश्चिदेव प्रकाशिताः। अन्यास्तु विविधेषु ग्रन्थागारेषु सीदन्त्यः प्राकाश्यं प्रतीक्षमाणाः सन्ति। एतादृशानि काव्यानि कविभिः न केवलं गोपीजनवल्लभं, राधाप्राणनाथं, गोविन्दमवलम्ब्य विरचितान्यपि तु प्रायशस्तैः श्रीराम-शिव-पार्वती-चण्डिकाप्रभृतयः स्व-स्वेष्टदेवता अपि आलम्बनत्वेन विषयीकृताः येनाद्य सङ्गीतरघुनन्दनम् , रामगीतगोविन्दम् , रामगीतम् , गीत-गङ्गाधरम् , गीतगौरीपतिकाव्यम् , पार्वतीगीतम् अथ च चण्डिकाचरितचन्द्रिका-प्रभृतिनैकानि गीतकाव्यानि प्रायशः प्रयागतः प्रकाश्यमानायाः 'संगमनी'- पत्रिकायाः सम्पादकेन पण्डितप्रवरेण श्रीमता स्व0 प्रभातशास्त्रिणा सम्पादितानि सन्ति वर्तन्ते विबुधानां मनोविनोदाय। एतादृशां काव्यानां पारिभाषिकं नामधेयं, प्रभातशास्त्रिमहोदयेन 'रागकाव्यम् इति कृतं यत्त्वधुना विद्वद्भिः स्वीकृतं सद् बहुशः प्रयुज्यमानं वरीवर्ति। एतादृश्यां रागकाव्यपरम्परायामस्यामस्माभिर्नूत्लतया सम्पादितस्य कस्यचिदल्पज्ञात-काव्यस्य, तत्कर्तुश्च, सुधियां कृते स्वल्पं परिचयमत्र वयं दित्सामः । काव्यस्यैतस्य नामधेयं विद्यते "गीतगौरीवरम् " इति, कर्ता चास्य श्रीतिरुमलभट्टाख्यो दाक्षिणात्यःकविः। काव्यस्याभिधानेनैव स्पष्टं यदिदं काव्यं गौरीशंकर्योः प्रणयकेलिं वर्ण्यविषयत्वेन गृह्णाति। हिमवद्दुहितुरुमायाः शिवस्य चं प्रेमप्रसङ्गं प्रागेव महाकविना कालिदासेन कुमारसम्भवे वैशद्येन वर्णयताऽत्र विषये 'वाग्द्वारं' कृतमतः कालिदासीय-

मधुवाग्वज्रसमुत्कीर्णेऽस्मिन् मणौ सूत्रस्येव वर्तते निर्बाधा गतिः कवेस्तिरुमलस्य। ऐदम्प्राथम्येनप्रकाशितस्य ग्रन्थरत्नस्यास्य चतस्रः पाण्डुलिपयः परिज्ञाता यास्तु प्रयाग-शृङ्गेरी-जोधपुर-केलडि-नगरस्थग्रन्थागारेषु विद्यमानाः। सर्वासामुपलब्ध-मातृकाणां साहाय्येन, पाठभेदादिकं विविच्य, समीक्षात्मकदृशैव कोऽपि ग्रन्थः सम्पादनीयः प्रकाशनीयश्च भवतीति यद्यपि सिद्धान्तः, किन्तु कृतेऽपि बहुप्रयासे केलडि-शृंगेरीनगरस्थे मातृकेऽस्माभिर्नैव समुपलब्धे अतः केवलं प्रयाग-जोधपुरनगरयोः मातृकाभ्यामेव संतोषं विधाय लेखनत्रुटिनिरसनपूर्वकं स्वकीयविद्याबलेनैव पाठसंशोधनस्य यथाशक्ति यथामति च प्रयासोऽस्माभिर्विहितो येनेदमज्ञातं सरसं च काव्यमेकवारं विद्वज्जनचक्षुर्गोचरतां यायात् । अस्येदं प्रकाशितं संस्करणं दृष्ट्वा कदाचित् कोऽप्यन्यो दाक्षिणात्यो विद्वान् शुद्धतरं सामीक्षिकं च संस्करणमस्य काव्यस्याविष्कर्तुमुत्सहिष्यत इत्याशासे।

त्रयोदशसर्गात्मकमेतद् रागकाव्यम् । श्रीमज्जयदेवकृतगीतगोविन्दे केवलं द्वादश एव सर्गाः विद्यन्ते। एषैव सरणिरन्यैरपि रागकाव्यनिर्मातृभिरङ्गीकृता। किन्तु तिरुमलस्त्वेतां परम्परां भिनत्ति, एकेनाङ्केन तस्य काव्यं सर्वाण्यन्यानि रागकाव्यान्यतिशेते । अस्य काव्यस्य 'ग्रन्थ'-संख्या सप्तशतं विद्यते। 'ग्रन्थो' हि नामात्र अनुष्टुप्छन्दःपरिमाणवाची। द्वात्रिंशद्वर्णानां समष्टिः पुरातनपाण्डुलिपिशास्त्रे 'ग्रन्थ'-शब्द वाच्या। एवं सप्तशतानुष्टुप्श्लोकमात्रात्मकमिदं काव्यम् कदाचिद् भगवद्गीतादिरचनासु शतानां सप्तसंख्याकं माहात्म्यमवेक्ष्यैव तिरुमलः स्वकीयं काव्यमनेन परिमाणेन विरचयामास।

कविस्तिरुमलः कर्णाटकेषु 'केलडि' इत्यभिधस्य राज्यस्य नरेशस्य नायकवंशीयस्य 'वेङ्कटाद्रेः' सभाकविस्तं श्रितश्चासीत् । गीतगौरीवरस्य प्रत्येकं सर्गस्यान्ते पुष्पिकायां कविना स्वकीयस्याश्रयदातुः सप्रश्रयं सादरञ्चोल्लेखो व्यधायि। तस्य वंशादिविषये चापि महत्त्वावहा सूचना प्रदत्ता येन तस्याभिज्ञानमधिकृत्य कापि संशीतिर्विचिकित्सा वा नैव वर्तते। विजयनगरराज्य-स्यादक्षिणावर्तं विस्तारयितुः परमवीरस्य सम्राजः कृष्णदेवरायस्य (1509-1530 ई0) सेनानायका इमे 'नायक'- वंशीया राजानः कर्णाटकेषु कृष्णदेवरायप्रदत्तं राज्यं चिराय बुभुजुः। नायकवंशीयः प्रथमः स्वाधीनः प्रतापी च केलडीनरेशस्त्वासीत् सदाशिवाख्यो महापराक्रमी, यस्तु 1542-43 तमे ईशवीये वर्षे बीजापुरशासकस्य

'इब्राहीम-आदिल-खाँ' इत्याख्यस्य महतीं चमूं पराजयत यदाऽयं यवनाधिपतिर्विजयनगरमाचक्राम। सदाशिवस्य तनय आसीत् केलडिपुराधीशः शंकरभूपालः। तस्य च तनयावास्ताम् रामराजतिलको, वेङ्कटाद्रिश्च। रामराजतिलकस्य स्वर्गमनानन्तरं तस्यायमनुजो वेङ्कटाद्रिः 1585 तमे ईशवीये वर्षे राजसिंहासनमारुरोह, अथ च एकोनत्रिंशद्वर्षपर्यन्तं (1614 ई0 यावत् ) निर्बाधं राज्यं चकार। अस्यैव वेङ्कटाद्रेः सभाकविरासीदस्माकं तिरुमलः।

इदं केलडिराज्यं तुङ्गभद्राख्यपुण्यापगायाः तीरे निविष्टं सत् तत्रावर्तत यत्राधुना कर्णाटकराज्यस्य शिमोगा इत्याख्यं जनपदं (जिला) विद्यते। महाराष्ट्र (मराठा)- राज्यस्य स्थापनकर्तुश्छत्रपतेः शिवाजीमहाराजस्य शंभाजी-इत्याख्याय, यवनैर्युद्धे जिताय पुत्रायापि स्वराज्यात् पलायमानाय अस्य राज्यस्य महाराज्ञ्या चेन्नम्मया विपदि शरणं साहाय्यं च प्रदत्तम् । आर्यधर्मस्य, आर्यसंस्कृतेश्च संरक्षणार्थं केलडीपुराधीशाः सदैव बद्धपरिकरा आसन् ।

प्रतीयते यदयं केलडीपुराधीशो वेङ्कटाद्रिः स्वयमपि विद्या-व्यसनी, गुणग्राही, सुकविर्विद्वज्जनशरण्यश्चासीत् यतः तिरुमलस्तम् "अभिनवभोज" इति विरुदेन, "सुकविजनसुरभुज" इति विशेषणेन च प्रतिसर्गं पुष्पिकायां विभूषयति। तस्यैव मनोविनोदार्थं तेनेदं काव्यं व्यरचि, इत्यपि स कथयति। काव्यस्य परिसमाप्तिस्तु येन श्लोकेन भवति तत्र कविरात्मानं कालिदासेन तुलयति -

सत्यं साहित्यमुद्धर्तुं भोजे वेङ्कटराजताम् ।
प्राप्ते तु कालिदासोऽयं कविस्तिरुमलाभिधः ।।

अत्र 'भोज एव सत्साहित्योद्धरणाय वेङ्कटाद्रिरूपेण पुनर्जात' इति कविना स्वीय आश्रयदाता प्रशस्यते।

ग्रन्थारम्भेऽपि प्रथम एव सर्गे तिरुमलभट्टेन अष्टभिः पद्यैः (1/6-13) स्वकीयस्याश्रयदातुः वेंकटनृपतेः उच्चकोटिका प्रशस्तिर्गीता। एषु पद्येषु तिरुमलभट्टस्य पित्रा श्रीविष्णुभट्टेनापि विरचितमेतन्नृपतिप्रशंसापरं पद्यमेकं सन्निविष्टं वर्तते, यस्मिन् तस्य कीर्ति-बुद्धि-तेजः-सम्पत्ति-रूपादीनां प्रशंसा वर्तते। गन्धर्वैः देवसभायामेषु गुणेषु वर्ण्यमानेषु विविधा देवा ईर्ष्यावशात् कुप्यन्ति, अतस्ते तत्र नृपतेः केवलं दानशौण्डत्वमेव प्रशंसन्ति -

**कीर्तेर्वर्णन एष कुप्यति शशी बुद्धेर्गुरुस्तेजसस् -**
**तीक्ष्णांशुः पृथुसम्पदो नमुचिभिद्, रूपस्य पुष्पायुधः।**
**इत्यालोच्य समस्तदेवमनसां तुष्ट्यै सुधर्माश्रिताः**
**गन्धर्वाः किलदीश-वेङ्कटविभोर्गायन्ति विश्राणननम् ।। 1/11**

गीतगौरीवराख्यस्य काव्यरत्नस्य रचनाकालः कविना तिरुमलभट्टेन स्वयमेव त्रयोदशसर्गस्यान्तेऽनेन श्लोकेन निबद्धः -

**अब्दे भास्वति शालिवाहनशके भूमीन्दुबाणक्षमा-**
**संख्याशालिनि सर्वधारिणि जगद्वाञ्छाप्रदानोत्सुकाम् ।**
**काशीवल्लभविश्वनाथमहिषीमुद्दिश्य मूकाम्बिकां**
**श्रीमद्वेङ्कटभूमिपालवचसा सोऽयं प्रबन्धोऽजनि।।13/15।।**

'अङ्कानां वामतोगति' रिति न्यायेन कृतायां गणनायां भूमिः -1, इन्दुः -1, बाणाः - 5, क्षमा -1, एवं 1511 शकसंवत्सरो यदि वा 1589 ईशवीयवत्सरोऽस्य ग्रन्थस्य रचनावर्षमिति निश्चीयते। उभावपि, कविस्तस्याश्रयदाता च विश्वनाथस्य, मूकाम्बिकाख्यायाः देव्याश्च भक्तावास्तामित्यप्यनेन स्पष्टम् । 'मूकाम्बिका'ख्यदेव्याः, दक्षिणावर्तेऽतीवभक्त्युद्रेकेन समर्चितायाः मन्दिरं कर्नाटकप्रदेशस्य ' कोल्लूर' इति नाम्नि स्थाने वर्तते। अस्याः समर्चनेन मूकोऽपि कविर्भवतीति प्रसिद्धिः। 'विश्वनाथ'शब्दस्योल्लेखः काशीगतं एतदाख्यं ज्योतिर्लिङ्गं प्रत्यपि कवेः श्रद्धां भक्तिं च प्रमाणयति।

'गीतगौरीवरम् ' तिरुमलस्य एक एव, प्रथमो वा ग्रन्थो नास्ति। अस्य काव्यस्य रचनायाः प्राक् कविना 'कस्तूरिकामञ्जरी' (नाटिका ?) प्रभृतयोऽनेके 'निबन्धाः' विरचिता आसन्निति तेनैव प्रतिसर्गमन्ते सगर्वमुद्घोषितम्। आत्मानम् 'उभयकविकुलतिलक'मिति प्रथयता स कदाचिद् ध्वनयति यत् तस्य मातृकुले, पितृकुले चोभयत्र प्रथितयशसः कवयोऽजायन्त। 'अत्रि'गोत्रे लब्धजनेरस्माकं कवेर्मातुर्नाम 'नरसाम्बिका' (द्र0 *जयति नरसाम्बिकातनयवचनम्* , 13/5,) पितुश्च नामधेयं 'विष्णुभट्ट' इत्यासीत् (*अत्रिगोत्रसुधाब्धिकौस्तुभविष्णुसूरिसुतेन*, 7/15/8), यश्च कवेरनुसारं महापण्डितः, साहित्यसागरपारीणः, काव्यशिक्षागुरुश्चासीत्। अयं खलु तस्य जनकः, स्वयं तिरुमलभट्टोऽपि कदाचित्, शृङ्गेरीमठे तत्समये शङ्कराचार्यपदवीमलङ्कुर्वाणानां श्रीनरसिंहभारतीत्याख्यविद्वत्तल्लजानां

शिष्यावास्ताम् । अयं श्रृङ्गगिरिस्तावत् तुङ्गभद्राख्यनद्या त्रिदिशं वेष्ट्यमानो वर्ततेऽत इयमपगास्य गिरेरुपकण्ठं मङ्गलसूत्रायत इति कवेरुत्प्रेक्षा। इयं खलु पुण्यसलिला धरोद्धरणसमये समुद्रोद्गतस्य, शरीरं व्याधुन्वतो महावराहस्य देहबिन्दुभिरुत्पन्नेति तत्रत्यानां विश्वासः।

प्रतिसर्गमावृत्ता कवेरियं पुष्पिका केवलमल्पीयोभिरेव शब्दैः सर्गाभिधानसूचवैः परस्परं विभिद्यते। अन्यथा सा एकरूपा। इयं पुष्पिकास्माभिरधस्तात् प्रथमसर्गत उद्धृत्य प्रस्तूयते येनास्माकमुपरितनस्य कथनस्य पुष्टिर्भवेत् -

''इति श्रीमन्महावराहदेहसंभूततुङ्गभद्राङ्गनोपकण्ठ-
मंगलसूत्रायमाणश्रृङ्गपुरीमठाधीशनारसिंहभारती-
यतीन्द्रचारुचरणारविन्दचञ्चरीकायमाण-सकल
पण्डितमण्डलीमण्डनीभूतसाहित्यशिक्षाचार्यश्रीविष्णु-
भट्टनन्दनेन कृतकस्तूरिकामञ्जरीप्रमुखानेकनिबन्धनेन,
उभयकविकुलतिलकेन तिरुमलभट्टेन विरचिते केलरि-
पुराधिनायकसदाशिवरायनायककुमारजगदेकवीर-
शङ्करभूपालतनुजस्य रामराजतिलकानुजस्य सुकवि-
जनसुरभुजस्याभिनवभोजस्य श्रीवेङ्कटाद्रिनायक-
महाराजस्य मनोविनोदनकरे श्रीगीतगौरीवरे काव्य-
मुखे निजेष्टदेवतामूर्तिवर्णनं नाम प्रथमः सर्गः।।''

शङ्कराचार्यपदवीभाक् श्रृंगेरीमठाधीशोऽयं 'नरसिंहभारती' एतन्नामधारी पञ्चमः खल्वाचार्यस्तस्य मठस्य। कदाचिद् विदितमेवैतदितिहासविदां विदुषां यदस्य मठस्य प्रतिष्ठापनं तुङ्गभद्राया दक्षिणतीरेऽवस्थितस्य विजयनगरराज्यस्य प्रतिष्ठापकाभ्यां हरिहर-बुक्कनामभ्यां महीपतिभ्यां 1337 तमे ईशवीये वर्षेऽक्रियत। ययोर्गुरुर्विद्यारण्यस्वामी 'पञ्चदशी'-कारश्चास्य प्रथमः शङ्कराचार्यः। आदिशङ्करतो गण्यमानायां गुरुपरम्परायामयं पञ्चमो 'नरसिंहभारती' त्रयोविंशतितम आचार्यः। अनेन विदुषा 'वैदिकनिर्णया'ख्यो ग्रन्थोऽपि प्राणायि यत्र वेदान्तदर्शनस्य वैदिकग्रन्थेषूपवर्णितेन दर्शनेन सह संवादः प्रपञ्चितः। स ईशवीयगणनया 1576 तमसंवत्सरात् 1600 तमवर्षपर्यन्तमस्य मठस्य शंकराचार्यपदमध्यतिष्ठत्। अस्यैव

शिष्या वेङ्कटाद्रिप्रमुखा नृपतयो विष्णुभट्ट-तिरुमलभट्टादयो विद्वांसश्च। शृङ्गेरीमठाम्नायगतगुरुपरम्परास्तोत्रे श्रीमतो नरसिंहभारतीतीर्थस्य कृते एतच्छ्लोकद्वयं प्राप्यते -

सुरसिन्धुलसत्कीर्तिं स्मृतिसिन्धुघटोद्भवम् ।
नारसिंहार्चकं श्रीमन्नारसिंहयतिं भजे ॥
सारासारविवेकज्ञं नादकाननकुञ्जरम् ।
शूरं दाने च निरतं नारसिंहयतिं भजे ॥

यतो हि गीतगौरीवरस्य रचनाकालः 1589 तममीशवीयवर्षं विद्यतेऽतः सुस्पष्टतया पञ्चमे श्रीमति नरसिंहभारतीयतिनि शृंङ्गेरीमठाधिपतित्व-मधितिष्ठत्येवास्य निर्मितिर्बभूवेति तथ्यात्मकम् । एवं कवेरुल्लेखस्य मठाम्नायेन सह वर्तते पूर्णतया सामञ्जस्यम् ।

केलडीपुराधीशा नायकवंशीया सर्वेऽपि राजानो शैवसम्प्रदायान्तर्गतस्य 'वीरशैव' इत्याख्यस्य मतस्यावलम्बिन आसन्नतः केलडीपुराधिपतिना वेङ्कटाद्रिणा पार्वतीशङ्करयो प्रणयकेलिमधिकृत्य काव्यरचनां कर्तुं कविस्तिरुमलः प्रार्थितः, प्रेरितश्चेति सत्यं, स्वाभाविकं च प्रतिभाति।

गीतगौरीवराख्ये रागकाव्ये ये त्रयोदश सर्गाः सन्ति तेषामभिधानानि कविना तत्र-तत्र वर्ण्यविषयानुसारं निम्नाङ्कितरूपेण कृतानि -

*1. निजेष्टदेवतामूर्तिवर्णनं नाम प्रथमः।*

*2. संकीर्णशंकरवर्णनं नाम द्वितीयः।*

*3. पार्वतीविरहशैत्योपचारवर्णनं नाम तृतीयः।*

*4. शिशिरोपचारवैफल्यनिवारकनायिकावचोवर्णनं नाम चतुर्थः।*

*5. विरहोत्कण्ठितनायिकाकथितप्रियस्मरण- तदनागमकारणविचारवर्णनं नाम-पञ्चमः ।*

*6. सदाशिवसभागौरीप्रमदवर्णनं नाम षष्ठः।*

*7. देवीसखीकृतपुष्पावचयन-स्वतापवर्णनं नाम सप्तमः।*

*8. चन्द्रोदयतदनन्तरनायिकाप्रलापपर्णनं नाम अष्टमः।*

*9. सखीमुखेन नायकाग्रे देवीविरहावस्थाकथनस्य, नायिकाग्रे प्रियागमनाशंसनस्य वर्णनं नाम नवमः।*

*10. वासकसज्जिकावदलङ्करणस्य, आगच्छतो नायकस्य नायिकाकोपप्रसादचिन्तावितर्कस्य व वर्णनं नाम दशमः ।*

*11. वरयात्रीकृतनायकोपालम्भ-तद्विरहवर्णनं नाम एकादशः।*

*12. नायकोद्यानप्रलाप-नायिका संदर्शनवर्णनं नाम द्वादशः ।*

*13. नायिकाविश्रम्भणसंभोगवर्णनं नाम त्रयोदशः ।*

सर्गानमुपर्युक्तैर्नामधेयैः स्पष्टं यद् गीतगौरीवरस्य कथावस्तुनि गीतगोविन्दस्य कथ्यपेक्षयाऽधिकमन्तरं नास्ति। एकदा केनचित् कारणेन (गङ्गां प्रत्यत्यादरं दर्शयते) शिवाय शैलजा क्रुध्यति, तं परित्यज्य च साऽन्यतो गच्छति। किन्तु शिवस्यात्मानं प्रति नैसर्गिकं पूर्वप्रणयं स्मरन्ती सा शिवविरहे दूयते। तस्याः विरहानलजन्यस्तापः सविस्तरं कविना वर्ण्यते। शिवोऽपि पार्वत्याः विरहेऽतिशयं सीदति। अन्ततः सखीभिः कृतेन प्रयत्नेन तयोरन्योन्यं प्रति विद्यमाना स्निग्धता पुनरपि जागर्ति। नायकस्त्वागत्य नायिकामनुनयति या तु मुदिता तस्य दोषं मर्षति। उभयोः प्रणयकेलिवर्णनेन काव्यं समाप्तिमेति ।।

अस्मिन् रागकाव्ये येषु विभिन्नेषु रागेषु ग्रन्थस्याष्टपद्यो निबद्धास्तेषां संज्ञास्त्वित्थम् -

**रामकरी, मालवगौडः, गुर्जरी, कर्णाटः, वसन्तः, वराटी, देशीवराटी, देशावरः, केदारः, भैरवः, धनाश्रीः, विभासश्च।**

प्रायः सैवाष्टपदी वैकल्पिकरूपेणापरेणापि केनचिद् रागेण गातुं शक्यते। कविरपि कासाञ्चिदष्टपदीनां कृते 'वा' इति शब्देन रागद्वयस्याप्युल्लेखं करोति (यथा- 'गुर्जरीरागे धनाश्रीरागे वा', 'मालवगौडरागे कर्णाटे वा', इत्यादि) एतद्रागसंगतानां तालानामपि संख्या भूयसी। *यति-निस्साररूपक-एकताल-प्रतिमन्द्र-द्रुताख्य*तालानां तेनोल्लेखः कृतः। अत्रापि कुत्रचिद् वैकल्पिकत्वं कल्पितं तेन (यथा- 'निस्सारताले रूपके वा', 'एकतालीताले रूपके वा', इत्यादि)।

किञ्चिद्विचित्रमिवेदं यदेतद्ग्रन्थीय 'जोधपुर'- मातृकायां कस्याश्चिदप्यष्टपद्याः सन्निवेशो नास्ति। सर्वा अपि चतुर्विंशतिसंख्याकाः सरसा अष्टपद्यः परित्यज्य अस्यां

मातृकायामवशिष्टानामेव पद्यानां संकलनं कृतम् । कस्मादेवं ग्रन्थं खण्डयित्वा प्रतिलिपीचकार लेखक इत्यत्र कारणं न विद्मः।

काव्यरचनाप्रक्रियायां प्रत्येकं कवेः स्वकीयाः केचन शास्त्रीयसिद्धान्ता भवन्ति। तिरुमलभट्टस्य कृते निर्दुष्टत्वं, गुणवत्त्वम् अथ च अलंकृतिभूषित्वं काव्यस्य चारुत्ववर्द्धने मुख्या विशेषाः। उक्तं चैव केनापि काव्यशास्त्रकारेण -

निर्दोषं गुणवत्काव्यमलङ्कारैरलंकृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ।।

दोषाविलं काव्यं, कवेरपयशसे कल्पते। दुष्टा कविता छिद्रमयजीर्णाम्बरवद् भवति, गुण( तन्तु) विरहितेन अनेन यो निजां तनुमावरीतुं प्रयतते स उपहास्यतां याति। प्रथम एव सर्गे कविरित्थं निर्दिशति-

छिन्नाऽशेषगुणैरतीवशिथिलैर्विस्पष्टदुःसन्धिभि-
र्मालिन्याकलितैरगोप्यबहुलच्छिद्रैरसन्मार्दवैः ।
संत्यक्तोरुदशाक्रमैः कुकविताजीर्णाम्बरैर्भूषणं
कर्तुं वाञ्छति यो बतास्य कुरुते तद्दूषणं प्रत्युत ।।

अत्र श्लिष्टोपमायाः यः साधीयानुपयोगः प्रयोगश्च कविना विहितः सोऽपि सहृदयानां चेतस्सु चमत्कृतिं जनयति ।।

सहृदयेषु पाठकेषु स्वकीयकाव्यस्य गुणान् आविष्कुर्वाणः कविः चरमे त्रयोदशे सर्गे कथयति यत् -

ओजः प्रौढिसुवृत्तिकान्तिसमतामाधुर्यकान्त्यूर्जितो
ग्राम्यानर्थकनिष्ठुरोक्तिरहितो राजद्रसैकाश्रयः।
निर्दोषः शुभसर्वलक्षणयुतः सत्सन्धिराजत्पदो
गम्भीरोऽपि लसत्प्रसादकलितः शैवानुषङ्गोज्ज्वलः ।। 13/13

अस्मिन् पद्ये ओजः-प्रौढि-कान्ति-समता-माधुर्यादि वामनोक्तगुणानां स्थितेः, ग्राम्यत्व-अनर्थत्व(निहतार्थत्व)- कर्कशत्व (श्रुतिकटुत्व)- प्रभृतिदोषाणामभावस्य चोल्लेखः स्वकीयायामेतस्यां रचनायां कविना कृतम् । सुवृत्तिपदेन मधुरा-कोमलावृत्ती ग्राह्ये, 'राजद्रसैकाश्रय'पदेन मुख्यतः शृङ्गारस्यैवात्रग्रहणमिति तु स्पष्टम् । पद्यसंघटनायां प्रयुक्तानि पदानि तु शोभनैः नातिदुर्बोधैः सन्धिभिः

संयुक्तानि, काव्यं तु विषयवस्त्वभिव्यक्तिभाषादीनां गाम्भीर्यं बिभ्रदपि प्रसादगुणयुक्तं वर्तते इति कवेरुक्तिः। इयमुक्तिर्नैवात्युक्तिरिति कोऽपि पाठकोऽस्य काव्यस्य प्रमाणयिष्यति। वयमप्यनया संवदामहे।

भाषा त्वस्य काव्यस्यातिप्रसन्ना, सरला, लालित्यपूर्णा, कोमलाक्षरयुता, मधुरा, संगीतमयी च। द्वादशे सर्गे 'निगडा' इत्यस्य स्थाने 'निगला' (निगळा) शब्दस्य, त्रयोदशे च 'तडित् ' इति कृते 'तटित्' शब्दस्य प्रयोगो दाक्षिणात्योच्चारणस्य प्रभावं संसूचयति। स्थाने-स्थाने अनुप्रासयुतोऽक्षरविन्यासः पद्यसौन्दर्यं सुतरामभिवर्धयति। अन्त्यानुप्रासस्यच्छटाष्टपदीषु विशेषतो दरीदृश्यते। अनुप्रासस्य प्रयोगः कियत्स्वाभाविकोऽकृत्रिमश्च इत्यत्रैकमेवोदाहरणं दीयते -

स तत्रानल्पकल्पद्रु-पुष्पाकलिततल्पभाक् ।
निर्विकल्पान् सुधाकल्पान् संकल्पान् समकल्पयत् ।। 10/12

कवेः वर्णनाशक्तिः कल्पनाशक्तिश्च उभेऽपि सुतरामुत्कृष्टे स्तः। वर्णनाशक्तिनैपुण्येन कवेः कलापक्षः, कल्पनाशक्तिनैपुण्येन च तस्य भावपक्षः उभावपि काव्ये नितरां हृदयावर्जकौ। कविकर्मकौशलं त्वस्य रचनायामुपयुक्तानां शब्दानां चयने, तेषां समीचीने वृत्ते रागानुरूपं संघटने चाभिव्यज्यते। भावपक्षप्राबल्यं तु वियोगिनीनारीहृद्गतभावानां सूक्ष्माभिव्यक्तौ, उत्प्रेक्षाद्यलंकारसंयोजनायां च प्रकटीभवति। रुदत्याः पार्वत्या अश्रूण्यधिकृत्य कवेरुत्प्रेक्षा यत् शैलसुता पार्वती पुरा भगवन्तं शंकरं स्वकीये हृदये निवेशितवती, किन्तु तस्य शिरसि गङ्गारूपामन्यां नारीं दृष्ट्वा सा तां सद्यो हृदयान्निष्कासयामास। इयमेव शोकसंतप्ता सा गंगा नूनं तस्याः अश्रुमिषेण चक्षुर्भ्यो निर्याति (शोकप्रभावेण सितजलस्य कालिमा !) -

दृष्ट्वा पुरा पुररिपुं हृदये प्रवेश्य
नेत्राध्वना गिरिजया सहसा निरस्ता।
तन्मौलितः सुरनदी घनशोकतप्ता
निर्याति नूनमसिताश्रुजलापदेशात् ॥ 2/5

इन्दोः प्रेष्ठा नायिका रजनी। तया सह तस्य विवाहसंस्कारः संपत्स्यते। तत्संबन्धीनि बहूनि कृत्यानीदानीं विधीयमानानि सन्ति। कालः एव तत्र मुहूर्तवित् । स खलु मुहूर्तशोधनं कुर्वन्नस्ताचलभित्तौ संध्यारागहरिद्रया गताः नाडिकाः लिखति।

रविरेव घटी या पश्चिमसमुद्रे मज्जति। ज्योत्स्ना एव तत्र कृत्यदीपः। नभोमण्डपे चन्द्ररजन्योः विवाहकर्म सम्पाद्यते यत्र अक्षत-लाजादिरूपेण तारकाः विकीर्णाः सन्ति। अत्र रूपकालंकारस्य उत्प्रेक्षायाश्च सौन्दर्यं सहृदयचेतांसि चमत्करोति-

संध्यारागहरिद्रया प्रतिलिखन्नस्ताद्रिभित्तौ गता,
नाडीः कालमुहूर्तविद् रविघटीपात्रेऽम्बुधौ मज्जति।
ज्योत्स्नादीपिनि निस्तमोजवनिके व्याकीर्णताराक्षते
रात्रीन्द्वोस्तनुते करग्रहमहो नूनं नभोमण्डपे ॥ 8/6

एतत्पश्चाद्वर्तिनि पद्ये रात्रेः कामिनीनायिकारूपेणतीवमनोरमं चित्रणं वर्तते। सांध्यरागरूपकुङ्कुमेन स्तनावालिप्य, तमोरूपं स्वकीयं धम्मिलभारं तारकरूपिमल्लीकुसुमैरलंकृत्य, ज्योत्स्नारूपिधवलकौशेयवसनं वसाना नीलवर्णकुमुदिनीरूपिनेत्रा, रागाक्रान्ता इयं यामिनीरूपिणी वधू विधुं मदयति -

आलिप्यास्ताचलकुचतटं कुंकुमैः सान्ध्यरागै -
स्तारामल्लीकुसुमकलितध्वान्तधम्मिल्लभारा।
धृत्वा ज्योत्स्नाविशदवसनं स्मेरनीलाब्जनेत्रा
रागाक्रान्ता मदयति विधुं यामिनी कामिनीयम् ॥ 8/7

अत्रापि कल्पनाशक्तेः-प्रौढिवशादियं रूपकगर्भोत्प्रेक्षा निरतिशयं रम्या। त्रयोदशसर्गगत एकस्मिन् पद्ये कविकृता काचिदतीवसुकुमारा कल्पना दृष्टिपथमुपयाति। शैलसुताः-शंकरयोः प्रणयप्रसङ्गे मनसिजः पार्वतीं प्रेरयन्नुपदिशति यत् त्वं प्रियतमस्याधरपानं कुरु, तमुपगूहस्व, स्निग्धैः वचोभिस्तं प्रीणयस्वेत्यादि। परन्तु हृद्गता लज्जा तां तथा कर्तुं वर्जयति। कस्योपदेशः पालनीय इत्यूहापोहं कृत्वान्ततः पार्वती लज्जायाः एव मतं स्वीकरोति यतः स्वपक्षस्य बलवत्तरत्वान्नारीणां नारीवचने एव भूयसी श्रद्धा !

पश्यालिङ्ग पिबाधरं प्रियतमं प्रेमोक्तिभिः प्रीणये-
रित्थं प्रेरयति स्म तां मनसिजो, मा मेति लज्जान्यतः।
गाढं वारयति स्म, तत्र गिरिजा भेजे द्वितीयं मतं
स्त्रीणां विप्रतिषेधके हि बलवान् पक्षः स्ववर्गोदितः ।। 13/4

अत्र अर्थान्तरन्यासस्यापि वैचित्र्यं दर्शनीयम् ।

श्लेषगर्भितविरोधालंकारस्य चारुतास्मिन् सरलातिसरले पद्ये दर्शनीया वर्तते। अत्राप्यर्थान्तरन्यासश्चेतश्चमत्करोति -

**लोके मित्राण्यमित्रत्वं प्रयान्ति व्यसनागमे।**
**तापयन् माममित्रोऽपि चित्रं मित्रायते शशी ।। 12/5**

कवेः तिरुमलस्य संगीतज्ञानम् परमोच्चां कोटिमधिरूढमासीदिति निश्चप्रचम्। कथमन्यथा स एतावत्सु रागेषु तालेषु च एतादृशनि मनोज्ञानि गीतानि रचयितुम् अशक्ष्यत् ! दक्षिणदेशीयकर्णाटसंगीतपद्धत्या गीयमानान्यतीव हृदयाह्लादकान्येतानि गीतानि सर्वमपि सहृदयं जनं रसपरवशं विधातुं पारयन्ति।

अस्मद्देवशास्त्रस्य पुराणकथानां च गभीरं ज्ञानमस्माकं कवेरासीदित्य-नेकैरस्यां रचनायां समागतैः सन्दर्भैर्ज्ञायते; और्व-वातापि-जम्भासुर-तारा-शम्बर-अन्धकादीनामुल्लेखाः अत्र प्रमाणभूताः।

एषा सरसा रचना साहित्यसौन्दर्यदृशाऽतीव रम्या। आशासे यदेषा कस्यचिद् विदुषो हृदयमावर्ज्य, तं स्वकीयमखिलं काव्यसौन्दर्यं विवरीतुं प्रेरयिष्यतीति। शिमोगाजनपदस्थजयनगरवासिनः डॉ0 जी0वी0 कल्लपुरमहाभागाः एतस्य ग्रन्थस्य केऽडीसंग्रहालये सुरक्षितां पाण्डुलिपिमालोच्य बेंगलूरनगरे 1997 तमे वर्षे संजाते विश्वसंस्कृतसम्मेलने शोधपत्रमेकं प्रस्तुतवन्तः इत्यस्माकं श्रुतिगोचरतां गतम् (तेषां वर्तमानः पत्रसङ्केतः 'श्रीराघवेन्द्रमठम्', सागरा- 577401, कर्नाटकाः)। आशासे यदस्य ग्रन्थस्येदानीं प्रकाशनेन अन्येऽपि एनं प्रत्याकृष्टा भविष्यन्तीति शम् ।

विदुषामाश्रवः

त्रिपाठ्युपाह्वो गयाचरणः



**गौरीगिरीशौ**

दशमशताब्द्यां निर्मिता, हिङ्गलाजगढ़तः, (मन्दसोर, म०प्र०) प्राप्ता, इदानीम्
इन्दौरसंग्रहालये संरक्षिता, जगत्पित्रोः प्रस्तरप्रतिमा
(सौजन्यम् - अमेरिकन इन्स्टीट्यूट ऑफ इण्डियन् स्टडीज़, वाराणसी)

श्रीतिरुमलभट्टविरचितम्

# गीतगौरीवरम्



## प्रथमः सर्गः

देव्याः प्राक्परिरम्भणे किल करौ द्वौ द्वौ पुनस्तत्करौ
रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने।
द्वौ नेत्रान्तचलालकापनयने मोक्तुं च नीवीं दृढां
द्वावेवं, सफलीकृताखिलकरः पायात् स वः शंकरः ।।१।।

राकाराजनिभाननां रतिशचीश्रीकाम्यमानश्रियं
साकारप्रकृतिं समाश्रिततते: शोकापनोदक्षमाम्।
आकाशोपममध्यमामनुपमां कोकाभिरामस्तनीं
मूकानामपि चारुवाग्विभवदां मूकाम्बिकामाश्रये।।२।।

सर्वज्ञं शिवयान्वितं प्रविलसत्कान्त्या वृषैकाश्रयं
भास्वद्भूतिविराजितं प्रसभतो निर्धूतपुष्पायुधम्।
विद्येशं द्विजराजमस्तकमणिं सन्तोषयन्तं सदा
विद्याशंकरमानतोऽस्मि सहसा श्रीनारसिंहं गुरुम्।।३।।

अत्र गुरुदेवतयोः श्लेषः।

श्रीहर्षस्य मुरारेरुत्प्रेक्षावल्लभस्य चापि कृतीः।
मुक्त्वाद्यावधि कस्य प्रतिपद्यं विद्यते युक्तिः।।४।।

सारस्ये कतिचित् प्रगल्भमतयश्चित्रार्थसम्पादने
केचित् प्रौढतमा नितान्तनिपुणाः केचिद् ध्वनेरध्वनि।
केचित् कोमलबन्धबन्धुरधियः प्रासे प्रसक्ताः परे
यस्यैतेष्वखिलेष्वपि स्फुरति धीस्तादृक् कविर्दुल्लभः।।५।।

अस्ति श्री किलदी-सदाशिवमहीपालान्वयाम्भोनिधेः
पूर्णेन्दुः प्रतिपक्षपार्थिवगजप्रोद्दण्डकण्ठीरवः।
सौजन्याम्बुनिधिर्निधीशविभवो विद्याविवेकाश्रयो
भोजः सत्कविसन्ततेर्वरगुणः श्री वेङ्कटक्ष्मापतिः।।६।।

भास्वत्पद्मासनस्थो नियमितकरणः प्रोल्लसद्दर्भपाणिः -
र्ध्यानाधीनान्तरात्मा विधिरखिलमुखोद्गीर्णवेदश्चिरं यत्।
तीव्रं चक्रे तपस्तत् सुफलितमधुना वेद्मि नो चेत् कथं स्याद्
अस्येदृक्सर्गकीर्तिः सकलगुणनिधेर्वेङ्कटक्ष्माधरस्य।।७।।

गद्ये पद्येऽनवद्ये रसिकजननुते साधुगीते प्रतीते
शास्त्रे शस्त्रे सहास्त्रे श्रुतिकलितगुणे सत्पुराणे प्रवीणे।
भोगे त्यागे सुयोगे नयवति सुधियां हर्षदायां कलायां
निःशंकातंकवेङ्कट्क्षितिपतिसदृशं धन्यमन्यं न मन्ये ।।८।।

दृष्ट्योज्जीवयति स्मरं युवतिषु प्लुष्टं पुरारेर्दृशा
कीर्त्या नित्यमधःकरोति शशिनं तन्मौलिसंभावितम्।
तद्भृत्यान् सहते न वीक्षणपथे तच्छीलतोऽन्यच्चरं-
श्चित्रं वेङ्कटभूमिपालतिलकः शंभोः प्रियः प्राणवत्।।९।।

कैलासन्त्यखिला नगाः, सुरसरित्पूरन्ति नद्यः, खगाः
हंसन्तीन्दुशिलातलन्ति दृषदः, शेषन्ति वाताशनाः।
शक्रेभन्ति गजाः, शिवन्ति दिविजाः, श्रीवेङ्कटक्ष्मापते-
र्हन्तात्यन्तसमुद्यतेन यशसा लुप्तं जगत्यन्तरम्।।१०।।

कीर्तेर्वर्णन एष कुप्यति शशी, बुद्धेर्गुरुस्तेजसस्-
तीक्ष्णांशुः पृथुसंपदो नमुचिभिद् रूपस्य पुष्पायुधः।
इत्यालोच्य समस्तदेवमनसां तुष्ट्यै सुधर्माश्रिताः
गन्धर्वाः किलदीश-वेङ्कटविभोर्गायन्ति विश्राणनम्।।११।।

इदमस्मज्जनकेन श्री विष्णुभट्टेन कृतं पद्यम्।।

सोऽयं निर्जितदुर्जयारिनिवहः प्राप्ताक्षयश्रीभरः
प्रख्यातः करदीकृताखिलनृपः सत्त्यागभोगोन्नतः।
सन्मन्त्रीशनिवेशितक्षितिभरो नानाकलापारगः
सद्विद्याः परिशीलयन् सह बुधैर्नित्योत्सवः क्रीडति।।१२।।

सौन्दर्यप्रवणः कुजातिवनिता गत्वेव लोकोऽधुना
शृंगारैकरुचिर्बताधमकथाः श्रुत्वा न नश्यत्विति।
मत्वा श्रीकिलदीश-वेङ्कटनृपः शृंगारचारुक्तिभि-
श्चारित्रं शिवयोर्निबध्य विमलीकर्तुं जगद् वाञ्छति।।१३।।

मौनं यस्योपदेशः सकलमुनिनतेर्यस्य भिक्षुत्वमुद्रा
लोकस्यैकाधिपत्ये, जितकुसुमशरो यश्च वामाङ्गजानिः।
यस्यैते गर्भदासाः सकलदिविषदो यो बहिर्द्वारदेशं
बाणस्याध्यास्त रक्षन्, तमिह जगति कः स्तोतुमीष्टे महेशम्।।१४।।

छिन्नाशेषगुणैरतीवशिथिलैर्विस्पष्टदुःसन्धिभि-
र्मालिन्याकलितैरगोप्यबहुलच्छिद्रैरसन्मार्दवैः।
संत्यक्तोरुदशाक्रमैः कुकविता जीर्णाम्बरैर्भूषणं
कर्तुं वाञ्छति यो बतास्य कुरुते तद्दूषणं प्रत्युत।।१५।।

इति मे भीतिभाजोऽपि स्वप्ने शंभोरनुग्रहः।
मुखरीकुरुते वक्त्रं कोकिलस्येव माधवः।।१६।।

दिष्ट्या काव्यमिदं समाप्तिमयतां मा वा, बुधैः स्तूयतां
मा वा, सुप्रथितं क्षितौ भवतु वा मा वा, न तत्राग्रहः।
किन्त्वेतत्कथने मनः प्रतिपदं मुक्तान्यसङ्गस्मृतौ
यल्लग्नं शिवयोः स एव परमो लाभोऽस्ति मे निश्चयः।।१७।।

क्षीराब्धौ निवसत्यपि त्यजति कः क्षाराम्बुधिं, काञ्चने
शैले सत्यपि किं त्यजन्ति मुनयः श्रीपर्वतादीनपि।
तद्वत् पूर्वमहाकवीन्द्रकृतिषु स्फीतास्वपि क्ष्मातले
भिन्नाकांक्षजने मदुक्तिरपि किं न क्वापि लब्धा स्थितिम्।।१८।।

वर्ज्यं किञ्च न वाजिवारिजमुखीवस्त्रादिकं प्राक्तनं
कस्तूरीकुसुमौघमौक्तिकलतागव्यादि किञ्चिन्नवम्।
ग्राह्यं चास्ति, बुधास्ततो मम कृतिर्नव्येति नैतावता
त्याज्या, किन्तु गुणागुणैः सुविदितैः कार्यं यदत्रोचितम्।।१९।।

लोके लोकोत्तरगुणवता नायकेनापि हीनं
काव्यं श्राव्यं भवति यदि तन्नामभिः कामशत्रोः।
मध्ये बद्ध्वा मम कृतिरियं त्वप्रबन्धं तमेव
स्तोतुं जाता किमुत जगतां पाविनी भाविनीति।।२०।।

सद्वृत्ता विलसत्सुकान्तिरमिता मोदप्रदोद्यद्गुणा
मृद्वी साध्वभिवर्णिता सुमनसामग्रे समुद्यद्रसा।
मद्वाङ्मञ्जुलमालतीस्रगधुना गौरीशपादार्पिता
प्रीत्या मूर्ध्नि बुधैर्निधाय न कथं संश्लाघ्यते सादरम्।।२१।।

लोके सर्वागमेभ्यः श्रुतिरधिकतरा मुख्यतोऽस्या विधेयो
यागस्तस्यापि नाकागमनमुरुफलं तस्य च स्वर्वधूनाम्।

संगस्तस्मादशेषश्रुतिहृदयनुतां[1] सारसौख्यैकदात्रीम्
कान्तां नित्यं निजांगे दधदजनि शिवो देवताचक्रवर्ती ।।२२।।

ख्यातो नूतनभोजराज इति यः श्रीवेङ्कटक्ष्मापतिः
सोऽयं कारयिता, कविस्तिरुमलस्तस्य प्रियः प्राणवत् ।
वर्ण्यं कर्णरसायनं श्रुतिनुतं शम्भोश्चरित्रं रसः
शृंगारस्तदिहाभिनन्दति न कस्तादृग्वचोविभ्रमम्[2] ।।२३।।

तत्रादौ कीर्तयिष्यामि प्रत्यूहानां प्रशान्तये ।
सोमस्य सोमजूटस्य मूर्तिमार्तिहरां पराम् ।।२४।।

।।रामकरिरागे यतिताले।।

*शीलय हृदय शिवारमणम् ।*
*तक्षकावलिकुवलयहिमकिरणम् ।।*

।। पल्लव ।।

*वामाङ्कश्रितयाऽपरभागविस्तारितभुजलतयालम् ।*
*गिरिसुतया परिरब्धमितरकरधृतकोकनदया सलीलम् ।। 1 ।।*

*वरगिरिजागुरुतरकुचघटतटघटितविकटहृदयान्तम् ।*
*तदलकवकुलमिलदलिकुलकृतकलरवकोमलकान्तम् ।। 2 ।।*

*सुरतरुतलदलदमलकमलनिलयं शशिशकलोत्तमाङ्गम् ।*
*शारदा-शारदनीरदनारदपारदरुचिरुचिराङ्गम् ।। 3 ।।*

---

१. 'श्रुतिविरुतगुणां' इत्यपि पाठान्तररूपेण पत्रस्योपरिभागेऽङ्कितं वर्तते ।
२. 'कः श्रीगीतगौरीवरम्' इति पाठान्तररूपेण पत्रस्योपरिष्टादङ्कितम् ।

सरसिजमदविदलनकरकरधृतहरिणवराभयटङ्कम्।
अनिलकमलकुवलयसखलोचनमपगतसकलकलङ्कम्।।4।।

तुंगनिजांगसुसंगतमंगलभूषणमणिगणकान्त्या।
सन्ततमखिलदिगन्तरमपि तद् दीपयन्तमनमान्त्या।।5।।

ललितनिजोभयपार्श्वगगुहगजमुखमुखालोकसानन्दम्।
कुन्दकुसुमवन्मन्दहसितयुतसुन्दरवदनारविन्दम्।। 6।।

हरि-हरिहय-धनदादि-सुरासुरविविधविभूतिनिदानम्।
दक्षमहांध्वरशमितमदोद्धतसकलदिविषदभिमानम्।।7।।

अभिनवभोजवेङ्कटनृपलालिततिरुमलकविमुखजातम्।
गीतमिदं मुदितां तनुतां जनतां शिवपदमुपनीतम्।।8।। २५।।

श्रीमत्सदाशिवनृपान्वयवार्द्धिचन्द्र-
श्रीवेङ्कटेन्द्रविभुचित्तविनोदनार्था।
गीतिः प्रकीर्तितशिवाधवचारुमूर्ति-
राकर्णिता मलहरीति किमत्र चित्रम्।।२६।।

इति श्रीमन्महावराहदेहसंभूततुङ्गभद्राङ्गनोपकण्ठमंगलसूत्रायमाण-श‍ृङ्गपुरीमठाधीशनारसिंहभारतियतियतीन्द्र चारुचरणारविन्द-चञ्चरीकायमाण - सकलपण्डितमण्डलीमण्डनीभूतसाहित्यशिक्षाचार्य-श्रीविष्णुभट्ट- विद्वन्नन्दनेन कृतकस्तूरिकामञ्जरीप्रमुखानेकनिबन्धनेन उभयकविकुलतिलकेन तिरुमलभट्टेन विरचिते केलरिपुराधिनायक-सदाशिवरायनायककुमारजगदेकवीरशंकरभूपालतनुजस्य रामराजतिलकानुजस्य सुकविजनसुरभुजस्य अभिनवभोजस्य श्री वेङ्कटाद्रिनायकमहाराजस्य मनोविनोदनकरे श्रीगीतगौरीवरे काव्यमुखे निजेष्टदेवता मूर्तिवर्णनं नाम प्रथमः सर्गः।।

## द्वितीयः सर्गः

भागीरथीधर भवाम्बुधिकर्णधार
नागेन्द्रहार नगराजसुताविहार।
रागादिदोषरहितेषु कृतोरुतोष
मा गास्त्रिनेत्र मम चित्तगृहात् परत्र।।१।।

।। गौंडा मालवरागे यतिताले।।

दुरितजलधितरणं तरणे न हि चोद्यं,
त्वां भजतां धृतदण्डमभेद्यम्।
शंकर, धृतदिनमणिमूर्ते, पाहि कृपाजलधे।।1।।

वहसि निजाङ्कतले मलिनांशुकमाल्यं,
कुपिततमोरदहतिकिणकल्पम्।
शंकर धृतशशधरमूर्ते, पाहि कृपाजलधे।।2।।

वहसि सदा भुवनं सकलं त्वमखेदं,
कोऽपि बलं कलयति न तवेदम्।
शंकर, धृतमारुतमूर्ते, पाहि कृपाजलधे ।।3।।

तव मुखगतमशनं सकलं सुरजालं,
वाञ्छति जगति शुचिस्त्वमतोऽलम्।
शंकर, धृतहुतवहमूर्ते, पाहि कृपाजलधे ।।4।।

त्वमवसि सकलजनं तृषया मृतकल्पं,
तदमृतनाम तवार्हमनल्पम्।
शंकर, धृतजीवनमूर्ते, पाहि कृपाजलधे।।5।।

वहसि निजोदरगं विविधं वसुजातं,
संश्रितजनमिव पोषितुमेतम्।
शंकर, विधृतावनिमूर्ते, पाहि कृपाजलधे ॥6॥

तव गुणमखिलजनो वदति श्रुतिवेद्यं,
निरुपमितं च विभुत्वमभेद्यम्।
शंकर विधृतात्मखमूर्ते, पाहि कृपाजलधे ॥7॥

केलदिवेङ्कटनृपतेर्मनसः कृततोषं,
शृणु तिरुमलकविगीतमदोषम्।
शंकर धृतवसुमितमूर्ते पाहि कृपाजलधे ॥8॥ २॥

वार्द्धिं वर्द्धयते तमः शमयते ज्योतिर्गणं बिभ्रते
भूतालिं दधतेऽन्तरं प्रददते तुष्टान् सुरान् तन्वते।
तापाटोपहृते हुतं प्रवहते मूर्त्यष्टकं कुर्वते
ब्रह्माण्डं सृजतेऽवते च हरते शंभो प्रणामोऽस्तु ते॥ ३॥

त्रैलोक्यप्रमदातिशायिगिरिजासौन्दर्यमालोकितुं
श्रोतुं तन्मृदुजल्पितं रसयितुं तच्चारुबिम्बाधरम्।
घ्रातुं तन्मुखसौरभं गुरुकुचाभोगं दृढं मर्दितुं
दृक्कर्णाननासिकाकरततिं बिभ्रच्छिवः पातु वः॥४॥

॥ गुर्जरीरागे निस्सारताले॥

सरसिजसंभवभाविता[1] मुनिसेविता,
विगलितविविधविकार।
जय जगदेकपते॥ 1॥

---

१. संगीताग्रहेण गायनसौकर्याय सर्वत्र अकारस्य दीर्घत्वम्।

खेलनविजितजलन्धरा शितिकन्धरा,
सुरकुलजलनिधिचन्द्रा।
जय जगदेकपते।। 2।।

हिमसमतनुरुचिभासुरा विजितासुरा,
मदनमदेभमृगेन्द्रा।
जय जगदेकपते।। 3।।

श्रुतिनुतगुणराजिता हरिपूजिता,
सकलभुवनतरुबीजा।
जय जगदेकपते ।। 4।।

शरवरतोषितपाण्डवा कृतताण्डवा,
भजननिकर सुरभुजा।
जय जगदेकपते।। 5।।

सुरवरशिखरिशरासना पुरशासना
रविशशिरचितरथाङ्गा।
जय जगदेकपते।। 6।।

शरणागतजनबान्धवा श्रुतिसैन्धवा
गिरितनयाकलिताङ्गा।
जय जगदेकपते।। 7।।

वेङ्कटनृपवरकारितं रसपूरितम्,
शृणु कवितिरुमलगीतम्।
जय जगदेकपते।। 8।। ५।।

संलिष्टोरुयुगान्तरालकलितं नीवीकलापं बलाद्
आक्रष्टुं चकितः प्रसूनमृदुतन्मूलव्यथाशंकया।
तज्जङ्घान्तरवेशितोर्ध्वगनिजश्लक्ष्णोरुविश्लेषितं
हृत्वा तं प्रहसन्नवोढगिरिजासंगे शिवः पातु वः।। ६।।

।। इति श्री मन्महावराहेत्यादि गीतगौरीवरे
संकीर्णशंकरवर्णनं नाम द्वितीयः सर्गः।।

## तृतीयः सर्गः

गौरीभूरितपःफलं, पशुपतेः सम्यक् समाधेः फलं
लोकानां नयनद्वयोद्भवफलं क्षोणीधराणां प्रभोः।
गार्हस्थ्यस्य फलं समस्तदिविषत्सौभाग्यवल्लीफलं
वाग्वृत्तेः कृतिनां फलं दिशतु वो श्रेयः स कोऽप्युत्सवः।।१।।

अथ कथमपि नीत्वा मुक्तभोगं सरागं
निजपरिणयनाहः पञ्चमं किञ्चिदूनम्।
सदसि विबुधसार्थप्रार्थितार्थप्रदानै-
श्चिरयति रमणेऽभूच्चण्डिका चण्डतापा।।२।।

साधारणप्रेमवतोर्विलासिनो-
श्चिरप्रवासे यदघं भवेन्महत्।
तत्सर्वमद्रेर्दुहितुः क्षणादभूद्
अहो महाप्रेम्णि युगायते किल।।३।।

तदा तदालोक्य जया विजयामेत्य सत्वरम्।
व्यथामकथयद् देव्या घोरमारशरोद्भवाम्।।४।।

।। रामकरिरागे यतिताले ।।

*शैलजा विरहे सखि सीदति।*
*शैलजा विरहे।*

*।। पल्लव ।।*

हृदयविनिहितभुवनगुरुकान्ता।
श्वसिति भरादिव बहुतरतान्ता।
शैलजा विरहे सखि सीदति।।1।।

वहति तनूमतिपाण्डिमसंगाम्।
जेतुमिवेशशिरोधृतगंगाम्।
शैलजा विरहे सखि सीदति।।2।।

अतितनुमातनुते तनुमीशा।
मातुमिव प्रियमनसि कृताशा।
शैलजा विरहे सखि सीदति।।3।।

जपति शिवेति मुहुः प्रहरन्तम्।
तर्जितुमिव मदनं प्रसभं तम्।
शैलजा विरहे सखि सीदति।।4।।

द्वेष्टि सखीजनमपि बत नित्यम्।
कृतशिखिशुकपिकपोषणकृत्यम्।
शैलजा विरहे सखि सीदति।।5।।

न वदति न हसति नेच्छति गेयम्।
नात्ति न दीव्यति न स्वपितीयम्।
शैलजा विरहे सखि सीदति।।6।।

खिद्यति शुष्यति शोचति गूढम्।
विलपति विलुठति मुह्यति गाढम्।
शैलजा विरहे सखि सीदति।।7।।

*वेंकटनृपवरकारितमेतम्*
*नृत्यतु भुवि कवितिरुमलगीतम् ।।8।। ५।।*

दृष्टं पुरा पुररिपुं हृदये प्रवेश्य
नेत्राध्वना गिरिजया सहसा निरस्ता।
तन्मौलितः सुरनदी घनशोकतप्ता
निर्याति नूनमसिताश्रुजलापदेशात् ।।६।।

शंकरालीकजातोऽपि दहत्यग्निर्जगत्त्रयम्।
मारनालीकजातस्तु न जाने किं करिष्यति।।७।।

आकर्ण्य कर्णज्वरकारिर्णीं तां
वार्णीं विविग्ना विजया जवेन।
गत्वा शिवां वीक्ष्य समादिदेश
शैत्योपचाराय सखीसमाजम्।।८।।

।।कर्णाटरागे एकतालीताले।।

*सा विरहानलदग्धा।*
*शैलसुता मुहुरुपचरिता भृशमालिजनैरतिमुग्धा।।*
*।। ध्रुवपदम्।।*

*सा गमिता ललितेन्दुशिलाकृतधाराभवनमुदारम्।*
*निजमुखहिमकरकरततिसंगतिवहलितहिमजलधारम्।।1।।*

*श्लक्ष्णतरे विशदे विपुले शयिता शशिमणिमयमञ्चे।*
*भुवनपतेरुरसीव बभौ पुरुषायितकेलिप्रपञ्चे।।2।।*

शयननिहितनवपल्लवसन्ततिरुल्लसति स्म तदीया।
हृदयविनिर्गतसरुधिरदर्पकभल्लततिभिरुपमेया॥3॥

तत्कुचयुग्मरोचत विनिहितघनतरचन्दनपङ्कम्।
जनितशरद्घनपटलपिहिततटविमलमलयगिरिशङ्कम्॥4॥

गलमभिगमयितुमभिमुखमुद्यतसुमनोदाम नवीनम्
अधिकमराजत सकलकलानिधिमुखविधुपरिधिसमानम्॥5॥

गिरितनयाहृदयाकलिताघनसारजधूलिरनल्पा।
ऐक्ष्यत मारलता सुरसिन्धुतटीसिकतावलिकल्पा॥6॥

स्मरदवतापिततत्कुचनिपतदनारतहिमजलधारा।
व्यरुचदमरगिरिशिखरपतत्सुरसरिदुरुतररुचिचोरा॥7॥

घडवमुरारिवेंकटनृपलालिततिरुमलकविकृतगीतम्।
स्मरविरहातुरगिरिवरदुहितृशिशिरपरिकरनतिपूतम्॥8॥ ९॥

निरवधिकमृणालीनालनालीकजालैः
पिहितसकलगात्री पर्वतेन्द्रस्य पुत्री।
न खलु निखिलगीता जातिमात्रेण जाता
परमज़नि तदानीं पद्मिनी रूपतोऽपि॥ १०॥

॥"गीतगौरीवरे" प्रबन्धे पार्वतीविरहशैत्योपचारवर्णनं
नाम तृतीयः सर्गः॥

## ।। चतुर्थः सर्गः ।।

तस्यास्तथोपचरणानि कृतानि ताभि-
मीरज्वरेऽतिविषमे विफलत्वमापुः।
काव्यानि सत्कविभिरादरतः कृतानि
मूढे समत्सरसभावति भूभृतीव ।।१ ।।

।। रामकरीरागे विभासे वा एकताली ताले ।।

*क्षणमधुना नारायणं गिरितनया विरहानले*
*प्रभवति वपुषि विशृंखले*
*।। ध्रुवपदम् ।।*

*स्वयमपि तापमवाप्य यन्त्रगृहमह्नत शिवातनुतापम्।*
*अह्नत सुजनदुरितस्य सतो हि तदघविभजनमनुरूपम् ।। 1 ।।*

*धूर्जटिनिटिलतटाक्षिदहनपटुतद्विरहानलतप्तम्।*
*शशिमणिमञ्चतलं ददृशे कुरुविन्दजमिव रुचिलुप्तम् ।। 2 ।।*

*मामधरेण बताधरयतिकृतनिजपदसख्यमपीयम्*
*इति धृतखेदमिवातनुतापमगात् किसलयशयनीयम् ।। 3 ।।*

*स्मरशिखिसंज्वरधूमशिखाभरधूलितधूमितदीप्तम्।*
*तत्तनुचन्दनमैक्षि भसितमृगमदघुसृणश्रियमाप्तम् ।। 4 ।।*

*सरससुगुणमृदुसुमनोदामसुवृत्तमुमास्तनभारम्।*
*गुरुमुपगतमपगतजडिमाभजदुज्ज्वलभावमुदारम् ।। 5 ।।*

चन्द्रतयागजसखमपि मामियमहह मदनमदभंगे
योजयतीति रुषेव सिताभ्रकमुज्ज्वलति स्म तदंगे।।6।।

निपतितमतनुदहनजुषि तदुरसि हिमजलमजनि न दृश्यम्।
गतनिजगुणमनिवारिततापतयेव सलज्जमवश्यम्।।7।।

सरसगुणोत्कटवेंकटभूवरनुततिरुमलकविगीतम्।
जयति विजितशिशिरोपचरणगिरिदुहितृविरहमवदातम्।।8।। २।।

पूर्वं दुर्वहदर्पदर्पकशरीभूतं सरोजं वपुः
सर्वं पर्वतसार्वभौमदुहितुः संतापयामास यत्।
तत्तस्मादपि तापमाप निहितं ताभिस्तदंगे तदा
नालं कोऽपि फलं विलंघितुमहो प्राक्कर्मभिर्निर्मितम्।।३।।

सेयं पूर्वमुदासिकोरकमिषाद् बद्धाञ्जलिर्मत्पुरः
पश्चादूरुयुगं किलापहसतीत्युद्रिक्तकोपेव सा।
पार्श्वस्थं कनकप्रभं कदलिकाकाण्डं विशोष्य क्षणाद्
आतेने मलिनं समुज्ज्वलतरं स्वीयोरुविन्यासतः।।४।।

तापक्षेपि यदस्ति वस्तु भुवने नीहारहारोल्लसत्-
कह्लारोत्करसारसारससरः शैवालजालादिकम्।
तत्सर्वं बत पर्वतेन्द्रदुहितुर्दुवारतापं व्यधान्-
नैतच्चित्रमसम्मुखे सति जगत्क्षेमङ्करे शंकरे।।५।।

तापावहं तापनिवृत्तिबुद्ध्या
शीतोपचारं मुहुराचरन्तम्।
सखीजनं सा पटुयुक्तियुक्तै-
र्निवारयामास वचोभिरेव।।६।।

।।मालवगौडरागेण कर्णाटे वा प्रतिमंद्रताले।।

*यामि हे कमिह शरणम्।*
*आलि ते नौमि चरणम्।*
*अये मुञ्च शिशिरोपचरणम्।।*
*।।ध्रुवपदम्।।*

*मम कुशलममिलषसि यदि तदिह चन्दनम्*
*किमिति हृदि निक्षिपसि मदनदहनेन्धनम्।।1।।*

*सौरभाहूतकटुरवमधुपमालिकाम्।*
*दूरमपवारय नवीननवमालिकाम्।।2।।*

*यदि मदनदहनशमनाय कलितोद्यमा।*
*मदुरसि वितर सारघनसारमद्य मा।।3।।*

*घोरविरहज्वरं कलयसि ममान्तरम्।*
*तदपि सिञ्चसि हिमजलं बत निरन्तरम्।।4।।*

उपनयसि कुसुमविशिखाय मे मुञ्चते।
कमलमयशरततिं हृदयमदयं च ते।।5।।

कर्तुमभिलषसि यदि मदनशिखिभं जनम्।
तालवृन्तेन जनयसि किंप्रभं जनम्।।6।।

विपरीतमखिलमपि विमुख इह शंकरे।
नलदमप्यनलयति न कुरु तदिदं करे।।7।।

वेंकटनृपनुततिरुमलकवीरितम्।
गीतमगजाचतुरवरवचन पूरितम्।।8।। ७।।

दग्धाङ्गः सखि मन्मथः पुरजिता किं ते विधातेति न
ब्रूयाः, संप्रति निर्भयः स कुपितो द्वीपीव बाणक्षतः।
चण्डत्वं भजतेऽधिकं विषधरः किंकण्टकेनाहृते
निर्मोके, मरुता धुते च भसिते दावानलो दीप्यति।।८।।

जानामि मार इति किचिददृश्यमुग्रं
दैवं जगत्त्रयभयंकरमाधिशस्त्रम्।
व्याध्यायुधा भुवनभक्षणदक्षशक्ति-
स्तस्य प्रिया भवितुमर्हति सैव मारी।।९।।

विषमो विषमास्त्रोत्थः सोऽयं सखि महाज्वरः।
विषे वा विषकण्ठे वा नोपभुक्ते न शाम्यति।।१०।।

इत्यपर्णागिरा तूर्णमुत्मृष्टशिशिरक्रियम्।
सखीजनमुवाचेत्थमनुक्तज्ञामिधा तदा।।११।।

दीर्घं निश्वस मा पुरो मृगमदश्वासेशनैः कोकिला-
लापे जल्प न कौमुदि प्रविश तद्देव्या गृहाभ्यन्तरम्।
न त्वं चम्पकमालिके स्पृश तनुं कर्पूरवल्लि द्रुतं
निर्गच्छाद्य शिवा शिवेन रहिता मूर्च्छां मुहुर्गाहते।।१२।।

इत्याकर्ण्य सखीवर्गे निर्गते भर्गवल्लभा।
विविक्तसेवया व्यक्तमुद्रिक्तमदनाऽभवत्।।१३।।

।। इति श्रीमन्महावराहेत्यारभ्य गीतगौरीवरे
शिशिरोपचारवैफल्यनिवारकनायिका-
वचोवर्णनं नाम चतुर्थः सर्गः।।

## ।। पञ्चमः सर्गः ।।

आयातो दयितो मदीयसदनं नाद्याप्यहो क्रीडति
क्वासौ तत् प्रविचारयेति गिरिजा संप्रेष्य वीणावतीम्।
तावत्कालविनोदनाय विजयां प्राणाधिकप्रेयसी-
माहूयात्ममनोगतान्यकथयद् रोमाञ्चिताङ्गी मिथः।।१।।

।। गुर्जरीरागे धनाश्रीरागे वा, रूपकताले ।।

रासे हरिमिव विहितविलासम् ।।
कान्ते कलयति मम हृदयं तम्।
शिवमिह परिणयने विहरन्तम्।।
।। ध्रुवपदम् ।।

मदभिमुखायतकरमनुरागिणमपजवनिकातण्डुलस्थम्।
विधुमिव रागिणमभिकुमुदिनिततकरमपघनमुदयस्थम्।।1।।

धृतसुरसरिदभिलषसि कथं हर गिरिकरतो जलधाराम्।
इति गदितो हरिणा प्रसृतिं विरचय्य हसन्तमुदारम्।।2।।

करसरसिजनालोपमधारमहोजलमिदमतिशीतम्।
इति वचसा प्रलपन्तमुदितपुलकं तनुकम्पमभीतम्।।3।।

*त्वयि निवसतु गतभीतिरितिः परमतनुरिहास्ति न वैरम्।*
*इति शपथं रचयितुमिव मत्करनिहितकरं जितमारम्।।4।।*

*सकुतुकचकितमदीक्षणभंगभियान्तरितं स्वदृगन्तम्।*
*मम वदने मुहुरखिलदिशावलनच्छलतः कलयन्तम्।।5।।*

*विस्मरगौरिगृहीतपदेऽत्र तपःश्रमयोजनदोषम्।*
*इति वचनेन विधेः स्मितमुखमुपलक्रमणे कृततोषम्।।6।।*

*मंगलसूत्रनिबन्धविलेपनतिलकादिकर्मकदम्बम्।*
*विदधतमुदितमदंगसंगसुखभंगभिया सविलम्बम्।।7।।*

*गुणनिधिवेंकटभूवरभूषिततिरुमलकविकृतगीतम्।*
*जयति विरहविधुराद्रिसुतानुतपुरहरपरिणयपूतम्।।8।। २।।*

निर्यान्तीषु सखीषु दिव्यशयने संस्थाप्य मां लज्जिताम्
सोत्कण्ठं परिरब्धुमुद्यतकरो रुद्धोऽथ मर्यादया।
एतच्छास्त्रमनात्मनीनमखिलद्विष्टं च मे कुर्वतः
सार्वज्ञ्यं धिगिति श्वसन् चिरयति प्राणेश्वरो हा कथम्।।३।।

आलिप्रेरितमत्कराग्रविलसत्सौवर्णशृंगेरितै-
र्नीरैः कुंकुमपंकिलैरतितरां सिक्ताखिलांगाम्बरः।
वाग्देवीं कमलां च साशमुपगम्यात्मप्रियाशंकया
सव्रीडं ललिते विलोक्य विहसन् कान्तः कदा लक्ष्यते।।४।।

।।मालवगौडरागे प्रतिमन्द्रताले।।

नूतनवर्णविजये वद किं चिरयति मे प्राणसमः समये विषमे।
।। ध्रुवपदम् ।।

यदि पुरभिदयं वेत्ति न हृदयं मम मनसिजशरदारितम्।
सकलविदिति तं कथमिव सततं कथयति जगदनिवारितम्।। 1।।

स्मरशरदूनं स यदि विजानन्नपि मम हृदयमुपेक्षते।
निरवधिकरुणानिधिरिति निपुणाः कथमिव शिवमाचक्षते।। 2।।

काममपि तरुणीं रमयति रमणीं स इति करोमि न संशयम्।
काममतपसा दुर्लभमिह सा वशयति जितहृदयेशयम्।। 3।।

मय्यपि दयितं प्रणयविरहितं मा वद सखि सरसाञ्चलम्।
वीक्षितमतुलं तस्य हि विपुलं प्रेम वदति यदचञ्चलम्।। 4।।

मयि सखि साशं जिगमिषुमीशं कोऽपि रुणद्धि नु घातकः।
अनितरनिघ्नं तमिह सविघ्नं भुवनपतिं रचयेत कः।। 5।।

मामिव दयितं विरहो यदि तं पतितदायमुपेष्यति।
त्रिभुवनदहनं दधतो दहनं दृशि स किमस्य करिष्यति।। 6।।

*जलमिव तृषिते हृदि विरहदुते रतिरतय इतीशिता।*
*चिरयति किमसौ गलविलुठदसौ मय्युचिताभिनिवेशिता।।7।।*

*अभिनवभोजं वेंकटराजं सुखयतु हरनुतिपावनम्।*
*जितसुरकविना तिरुमलकविना गीतमुमापतिदेवनम्।।8।। ५।।*

स्मरशरहतिभीतां स स्वयं सम्प्रयातां
किमुत सखि विलासी मामयं रन्तुकामः।
तदिममनुसरेयं शीघ्रमेवाभिसायं
वसति च मम चित्ते यच्चिरात् सैव वाञ्छा।।६।।

।। इति श्रीमन्महावराहेत्यारभ्य गीतगौरीवरे विरहोत्कण्ठित-
नायिकाकथितप्रियस्मरण-तदनागम-कारण-
विचारवर्णनं नाम पञ्चमः सर्गः।।

## ।। षष्ठः सर्गः ।।

ततो विदितवृत्तान्ता गत्वा वीणावती शिवाम्।
प्रवीणाऽकथयद् वार्णी वीणेव कलभाषिणी।।१।।

।। वसन्तरागे रूपकताले ।।

निवसति सखि तव पतिरतिकान्ते।
सदसि नभसि विधुरिव कलितोडुनि सुरवरविलसदुपान्ते।।
।। ध्रुवपदम् ।।

मरकतमणिमयकुट्टिमकान्तिशुकायितकेलिमराले।
विमलविधूपलभित्त्यनुबिम्बनशतगुणितामरजाले।।1।।

मृगमदलेपिनि पार्श्वगकुंकुमलेखिनि हिमजलसिक्ते।
मौक्तिकचूर्णककृतरचने सुरसालकुसुमवलियुक्ते ।।2।।

तरुणतरणिकिरणारुणतोरणमणिरुचिभिः सुरजाले।
मसृणघुसृणघनपंकविलेपनमपलपति स्फुटलीले ।।3।।

विकटविटंकगकृत्रिमयुवतिनिरावृतघनकुचभारम्।
पिदधति धूपजधूमसितेतरवरवसनैरनुवारम् ।।4।।

विधुकरनिकरनिभच्छविमौक्तिकगुच्छविचित्रविताने।
सुरसरिदिनतनयादिनदीकरचालितचामरफेने।। 5।।

जयरवमुखरचतुर्मुखशतमखहरसखमुखसुरसारे।
मंगलसंगततुंगमृदंगघनध्वनिमुदितमयूरे।। 6।।

घनतनुपरिमलमिलदलिरुतयुतसुरसुदतीकलगाने।
रम्भानृत्तविलोकनसंभृतसंभ्रमविबुधविताने।।7।।

कलियुगकर्णवेंकटनृपलालिततिरुमलकविकृतगीतम्।
संनुतशंकरसाधुसभं सकलं दहतादघ जातम्।।8।। 2 ।।

तत्रावसरमासाद्य देवैर्देवशिरोमणिः।
दण्डवत् प्रणतैः सर्वैः प्रार्थ्यमानोमयैक्ष्यत।।३।।

प्रार्थितं सुरसार्थेन किं कथं तेन सार्थितम्।
पृष्टेति स्पष्टमाचष्ट सा वाक्केलिं सभासु ताम्।।४।।

स्वामिन् शंकर, किं सुराः, सुमनसां विज्ञाप्यमस्तीह नः
किञ्चित्, तद् वदताशु, देयमभयं, दत्तं, न याच्ञा वृथा—
कार्या, कुत्र तथा कृता, नहि नहि त्वत्सन्ततौ सस्पृहै-
रस्माभिः प्रहितः पुरा मनसिजो जाने तमुज्जीवय।।५।।

''अद्य कामो यथाकामं सीमारहितविक्रमः।
करोतु मामप्यर्धाङ्गसंगितुङ्गस्तनीतनुम्'' ।।६।।

एवं वदति देवेशे हृष्टास्त्रैविष्टपाः शुभे।
तस्मिन्नवसरे स्वार्थान् प्रार्थयन्ते पृथक् पृथक् ।।७।।

श्रुत्वेति भीता प्रीता च निश्चित्य प्रियसंगमे।
विलम्बमम्बिकोद्यानं प्राप तापशमाशया ।।८।।

।। वसन्तरागे एकातालीताले ।।

*मुग्धा प्रमदवनम्।*
*विरहविधुरमतिराप सा।*

*।। पल्लव ।।*

*अंगजगजकरशीकरनिभैरभितः कृतसेकम्।*
*सरसरसालकुसुमविसरस्रुतमधुपृषतैः कृतशोकम्।।1।।*

*किंशुककोशचयं दधदंगजरथिरथशुकमुखमित्रम्*
*व्यथितपथिकगलोहितलोहितं भारसुचोरलवित्रम्।।2।।*

*दधदनिलोद्धतकेसरकेसरधूसरधूलिवितानम्।*
*भुवनजयोद्यतमनसिजराजबलोद्धतरेणुसमानम्।।3।।*

*कलयदुपरिचलदलिपटलाकुलविमलसुमनसमशोकम्।*
*मनसिजमान्त्रिकविहितविरहिमारणमखधूमपताकम्।।4।।*

*मन्दगमनमलयानिलमदगजमाश्रितमंगजराजम्।*
*उपचरितुं विधृतातपवारणमिव तततालसमाजम्।।5।।*

*मदनरथिकरथचीत्कृतिचतुरशुकावलिरुतकृतखेदम्।*
*स्मरकरकार्मुकखरतरटंकृतिमधुरमधुकरनिनादम्।।6।।*

*वनवनिताकुंकुमतिलकाकृतिचम्पकमुकुलनिकायम्।*
*कलयदसमशरकरधृतकाञ्चनकुन्तशिखाकमनीयम्।।7।।*

*शमदममुखपटुभटयुतहतिधृतिदुर्गहरणरणजातम्।*
*स्मरबलकलकलमिव दधदुन्मदविविधविहगरुतजातम्।।8।। ९।।*

*धृतनुतकुरबकमरुवककैतकचन्दनकुन्दकदम्बम्।*
*तिलकवकुलकदलीकतिरस्कृतनन्दनविपिनविडम्बम्।।१०।।*

*वेंकटनृपनुततिरुमलकविकृतगीतं मुदयति बुधानाम्।*
*जीवनमचलसुतावनवर्णनपावनमतिरसिकानाम्।।११।।*

तन्वी नीलाब्जनेत्रा किसलयचरणा कुन्ददन्ती लताङ्गी
रम्भोरु राज़तालीफलललितकुचा चारुचाम्पेयनासा।
श्यामा बिम्बाधरौष्ठी शुकपिकरुतवाक् पद्मिनी तत्तनुश्रीः
संयुक्ता माधवेन व्यतनुत वितनोरुद्भवं नात्र चित्रम्।।१२।।

।। इति श्री मन्महावराहेत्यादि गीतगौरीवरे
सदाशिवसभागौरीप्रमदवर्णनं
नाम षष्ठः सर्गः।।

## ।। सप्तमः सर्गः ।।

तस्मिन्नङ्गजशस्त्रसंग्रहगृहे सर्वस्वकोशे मधोः
श्रीखण्डाद्रिसमीरराजशिविरे भृंगप्रपामण्डपे।
खेलत्कोकिलबालपाठभवने वल्लीलसल्लासिका-
रंगे केलिवने प्रसूनलवनं काश्चिचलाश्चक्रिरे ।।१ ।।

।। गौडमालव-देशीवराटीरागे निस्सारकताले रूपके वा ।।

सखि सीदति गिरिजामनुयाता।
वनभुवि काचन कान्ता ।।

।। ध्रुवपदम् ।।

अभिनवमुकुलजातं कुरबकमुपगुह्य।
तमधिककुसुमयुतं न्यवलत न पुनरपोह्य ।।1।।

वरतनुरकृतचूतं मधुरमधुसमेन।
असमकुसुमकलितं कुटिलघटितवचनेन ।।2।।

कुसुमनिकरमशोके करगतमपचीय।
न्यधित चरणममुके पुनरपि नवकुसुमाय ।।3।।

विफलबहुजलसेकं वदनमधुरसेन।
वकुलमतुलकलिकं सुतनुरतनुत मितेन ।।4।।

*अपचितसकलसूना पुनरपि कुतुकेन।*
*तिलकनिहितनयना बहुकुसुममिह ततान।।5।।*

*यदकृत सरसगानं रणदलिमनुकृत्य।*
*तदसमकुसुमघनं व्यसृजदसनमुपकृत्य।।6।।*

*नवकुसुमततजातेरतिमृदुवचनानि।*
*अवददियमपि धृतेरवहदविकमिव तानि।।7।।*

*तिरुमलसुकविगीतं कलितमतिरसेन।*
*केलदि-नृपतिविनुतं जयति जगति सुकृतेन।।8।।* २।।

दृष्ट्वा प्रसूनलवनं क्रियमाणमाभि-
स्तुष्टा वसन्तबलशान्तिधियाथ मत्वा।
रुष्टा निजार्थमिति तद्गमितालिवर्गा
कष्टां दशामुपगता विललाप सैवम्।।३।।

मत्पादाधरहस्तहासनयनश्रीबन्धवस्ते शरा
मद्भ्रूवल्लिसहोदरं तव धनुर्मन्नेत्रमित्रं ध्वजः।
मन्त्री ते स च मन्मुखप्रियसुहृच्चन्द्रो मदीयं मन-
स्तातस्ते किमिदं तथापि मदन त्वं मद्वधायोद्यतः।।४।।

।। भैरवरागे, रूपकताले।।

*मुञ्च मन्मथ वञ्चनां मयि नूनमिदं तव तन्त्रम्।*
*येन ममैव वनं मम जीवनमाशु हरति परतन्त्रम्।*

।। ध्रुवपदम्।।

सानुरागसुमनास्तृतपल्लवपाणिरिवाभयदायी।
सोऽयमशोक इति प्रथितोऽपि कथं मम शोकविधायी।।1।।

भूरिविरोत्कलिकं सुमनोद्धृतरागमकारणवैरम्।
विरहिजनेऽप्यमुमाह तरुं बत मुनिरिति जगदविचारम्।।2।।

व्यथयतु रागि सहजकुटिलं च पलाशमिदं मम चित्तम्।
व्यथयति किमिति सुजातिभवं कुसुमं शुचि सततसुवृत्तम्।।3।।

पीतमदालिकरार्पितविमलपयाः परिमलविषजालम्।
विसृजति मयि चन्दनतरुराश्रितफणिगुणकलित इवालम्।।4।।

दलयति हृन् मलिनयति मुखं धूनयति शिरो दहतीदम्।
वपुरतिमृदुशुचिसुरभिशिशिरमपि मल्लिकुसुममविवादम्।।5।।

व्यथयतु चम्पकमहिमधुपयुगलं बत हरति किमेवम्।
बन्धुजीवकमधरसुरुचा निजबन्धोरपि मम जीवम्।।6।।

प्रकटितबीजरदं विहसति निजहृदि दलितोऽपि यदेवम्।
दाडिममिदमितरव्यथने कथमिव कलयतु मृदुभावम्।।7।।

संगरभीमवेंकटनृपनुतकवितिरुमलगीतमुदारम्।
जयति विरहविधुराद्रिसुतोपवनप्रलपितमघचोरम्।। 8 ।। ५।।

पाण्डुर्दक्षिणवातवेपिततनुर्धूलीभरैर्दूषिता
बिभ्राणा कृशतां पथोत्तरमलिध्वानोदिताक्रन्दना।
नानाकण्टकभाक् प्रियस्य गिरिशस्यावज्ञया दुःखिता
त्वं मां किं नु दुनोषि केतकि भवत्साम्यां सपत्नीधिया।।६।।

खर्वं न कल्पयसि मद्विरहोग्रदुःख-
विन्ध्याचलं पिबसि नाम महासमुद्रम्।
अन्तःप्रविश्य जनजीवहरं न काम-
वातापिनं शमयसे किमगस्त्य शंस।।७।।

निर्गत्य चूतविपिनान्मलिनः पराग-
भस्मानुलिप्तवदनः सहसान्यपुष्टः।
कुर्वन् कुहूकलकलं मम धैर्यवित्तं
मुष्णात्यहो किमयमालि किरातवंश्यः।।८।।

चारुश्रीनिलयं प्रबुद्धमुदये मित्रानुरागोर्जितं
बिभ्रत्कोशमुपाश्रितालिधृतये यत्सौमनस्याश्रयम्।
स्वच्छस्फारगुणाश्रितं कविकुले राजाधिराजोपमं
पद्मं मामबलां प्रति प्रतनुते हा हा प्रतापं निजम्।।९।।

।।इति श्रीमन्महावराहेत्यादि गीतगौरीवरे
देवीसखीकृतपुष्पावचयन-स्वताप-वर्णनं
नाम सप्तमः सर्गः।।

## ।। अष्टमः सर्गः ।।

मारो मारयति प्रियश्चिरयति, क्रीडावनं क्रीडति
प्राणैः, कोकिल एष कूजति, मरुत्सायन्तनः सर्पति।
नीलाम्भोरुहकाननं विलसति प्राचीमुखं स्मेरति
प्राप्ताः संप्रति किं करोमि युगपत् सर्वेऽप्यनर्था इति ।।१।।

इत्थं रुदत्याः किल हैमवत्या
निशामुखे भाविदशामसह्याम्।
विलोकितुं भीतिमतीव मीलन् -
नीरेजनेत्रान्निरगाद् दिनश्रीः ।।२।।

।। गुर्जरीरागे केदारे वा एकतालीताले ।।

*उदयति चन्द्रे विगलिततन्द्रे कुसुमशरे शरजालम्।*
*विसृजति भीता हिमगिरिजाता मोहकवचमधृतालम् ।।*
*।।ध्रुवपदम् ।।*

*सरति समीरे सन्मृदुचारे सरसिजसौरभसारे।*
*मलयविहारे मधुरसपूरे मानवतीधृतिचोरे ।।1।।*

*रुचिजितबिम्बे दिनकरबिम्बे वरुणदिशावनितायाः।*
*मणिमतिकान्तं श्रितसीमन्तं विहसति घनविभवायाः ।।2।।*

विद्रुमरुचिरे रविकरनिकरे लसति मदनशौर्याभे।
स्फुरति नभोगे संध्यारागे स्मरशिखिविशिखशिखाभे ।।3।।

विरहिसतीनामतिरुदतीनामश्रुजलैरिव पुष्टे।
सपदि समुद्रे लंघितमुद्रे तनयविलोकनहृष्टे ।।4।।

स्मरविशिखे सति निशितमुखे युवहृदयसंदलनकामे
सरसिजनिकरे प्रसरति तिमिरे कोकविरहिशिखिधूमे ।।5।।

घनमधुपमुदे जाग्रति कुमुदे युवतिनयनरुचिचोरे।
सरजतसूनं बलसद्मानं विहसति नभसि सतारे ।।6।।

मुदितचकोरे ज्योत्स्नापूरे स्मरनृपकीर्तिसमाने।
प्रसरति भीते तमसि चयान्ते विरहिह्रदय इव लीने।।7।।

मनसिजरूपं वेंकटभूपं मदयति गीतमतन्द्रम्।
सदमलमतिना तिरुमलकृतिना विनुतपरिकरचन्द्रम्।।8।।३।।

गाढं रूढयतीन्द्रधैर्यविलसद्दुर्गं विभर्तुं बलात्
पूर्वोर्वीधरतुंगशृंगविपिने गूढं स्मरक्ष्माभुजा।
न्यस्ता कापि पिशंगिका ध्रुवमतो निर्याति तप्तोज्ज्वलं
पिण्डं स्फाटिकमिन्दुमण्डलमिषान् मुक्त्वारुणत्वं क्रमात्।।४।।

आश्रीकण्ठमसावभूत्तनुभृतामेकाधिपोऽद्यात्मभू-
रित्युद्‌घोषयितुं दिशासु विधृता सद्रश्मिभिः संयता।
सद्‌वृत्ता जयघण्टिकैव पुरतो भात्यैन्दवी मण्डली
तस्यामायसकोणघातजनितं मालिन्यमङ्कायते।।५।।

पूर्वेद्युः पुरतो मम त्वमपरां गत्वा जडानां प्रभोः
पत्नीं द्राक् पतितः कलंककलितो मा मा करेण स्पृश।
पूर्वाशां गणयेत्युदीर्य सरुषा वामांघ्रिसंताडनैः
क्षिप्तस्तेन तपन्नुपैति हिमरुक् तत्पादलाक्षारुणः।।६।।

संध्यारागहरिद्रया प्रतिलिखन्नस्ताद्रिभित्तौ गता
नाडीः कालमुहूर्तविद् रविघटीपात्रेऽम्बुधौ मज्जति।
ज्योत्स्नादीपिनि निस्तमोजवनिके व्याकीर्णताराक्षते
रात्रीन्द्वोस्तनुते करग्रहमहं नूनं नभोमण्डपे।।७।।

आलिप्यास्ताचलकुचतटं कुंकुमैः सान्ध्यरागै-
स्तारामल्लीकुसुमकलितध्वान्तधम्मिल्लभारा।
धृत्वा ज्योत्स्नाविशदवसनं स्मेरनीलाब्जनेत्रा
रागाक्रान्ता मदयति विधुं यामिनी कामिनीयम्।।८।।

कन्दर्पकाहलीनाम काचित् कीरांगना तदा।
पद्यावलीं निगद्येति देव्या मूर्च्छाममूर्च्छयत्।।९।।

मूर्च्छाकुलागिरिसुताहृदयादपेतः
शोकस्तदालिनिवहं प्रविवेश नूनम्।
निःश्वासतापरुदिताश्रुमुखं समस्तं
तस्यामदृष्टमिह यत् सहसैव दृष्टम्।।१०।।

अद्यारभ्य शशांक संचर गतातङ्कं, विशङ्कं पिक
प्रौढं कूज, तवोत्पलास्ति न समं, मन्दानिल त्वं कृती।
यद्देव्या वदनं भवन्मदहरं म्लानं, विलीनं वचो
हा हा मीलितमीक्षणं विरमति श्वासानिलः सम्प्रति।।११।।

पाण्डुत्वं परिहृत्य वक्त्रमयते छायां निजां लोचने
वीतास्रे रुदितश्रमोऽपि विरतः कण्ठे गलत्संज्वरम्।
गात्रं शीतलमल्पतामुपगतः श्वासप्रयासश्शिवा
निर्वाणं न चिराद् गमिष्यति, परं दुःखाब्धिमग्ना वयम्।।१२।।

इत्थं विलापं विफलं विहाय
तदा तदालीजनता जवेन।
प्रबोधितुं पर्वतराजपुत्रीं
शीतोपचारं सहसा चकार।।१३।।

व्यर्थीभूते व्यजनपवने श्वासवातेन तप्ते
तासामस्रैरपि हि जले, पाणिभिः पल्लवौघे।
तस्या मूर्च्छामपगमयितुं न क्षमाणां तदोच्चै-
राक्रन्दो यः शिव-शिव-शिवेत्युद्गतोऽबोधयत् ताम्।।१४।।

गौरी ततस्ताभिरिति प्रबोधिता
मारास्त्रमालाभिरति प्रबाधिता।
निर्भर्त्सयन्ती जनमात्मबोधकं
निर्भिन्नकण्ठं विललाप साधिकम्।।१५।।

।। गुर्जरीरागे प्रतिमन्द्रताले।।

*हर हर हराय कमहम्, दूतमत्र करोमि।*
*।।ध्रुवपदम्।।*

*प्रेषयामि मनोभवं यदि कान्तमत्र नयेति।*
*भाललोचनमेनमीक्षितुमप्यसौ भयमेति।।1।।*

*संश्रुतं सुरकार्यमद्य विभीरनङ्ग विधेहि।*
*मुक्तयोगसरागचेतसि तत्र ते समयो हि।।2।।*

*भालचन्द्र मदीयबालसख प्रियं न ददासि।*
*त्वद्वचो न विलङ्घयेत् स च येन मूर्ध्नि धृतोऽसि।।3।।*

*संदिशामि हराय दक्षिणमारुतं विनयेन।*
*मन्द एष कदाऽत्र नेष्यति शंकरं त्वरितेन।।4।।*

*मद्वियोगबहूकृतश्वसितोरुसौरभ काम।*
*भृङ्ग मत्प्रियसंगमाय कथं यतिष्यति नाम।।5।।*

*शारिके श्रवणज्वरं सखि किं ममैव करोषि।*
*सा ममोपकृतिर्भवेद्यदि शम्भुमेत्य विरौषि।।6।।*

*त्वं ममानयसि प्रियं कलकण्ठि चेन्मणितानि।*
*तत्त्वयैव निवेदितानि कृतार्थयाम्यमितानि।।7।।*

*अत्रिगोत्रसुधाब्धिकौस्तुभविष्णुसूरिसुतेन।*
*गीतमेतदकारि वेंकटराजभोजमतेन।।8।।१६।।*

मन्त्रिणं कुरुमदाननेन्दुना, मद्भ्रुवा रचय चापवल्लरीम्।
मत्कराधरदृगंघ्रिणा शरान्, किञ्च पञ्चशर विमुञ्च वामताम्।।१७।।

।। इति श्रीमन्महावराहेत्यादि गीतगौरीवरे
चन्द्रोदय-तदनन्तर-नायिकाप्रलापवर्णनं
नामाष्टमः सर्गः।।

## ।। अथ नवमः सर्गः ।।

विज्ञाय विज्ञा समयं तमेव
ततो जया प्राप्य जवान्महेशम्।
भ्रूसंज्ञया लब्धवचोऽभ्यनुज्ञा
विज्ञापयामास मिथो यथावत्।।१।।

शम्भो पूर्वमुदर्कतर्कविमुखः कस्मैचिदिन्द्रारये
दत्त्वा भीष्टवरं निजार्तिचकितस्त्वं विद्रुतो, विष्णुना।
त्रातोऽद्यापि तथा त्वया मनसिजः संजीवितस्त्वत्प्रियां
हन्तुं वाञ्छति तन्निवारयति कः कृष्णोऽपि यत्पक्षगः।।२।।

हिमबालुकापि नवतप्तबालुका
हिमदीधितिश्च हर तिग्मदीधितिः।
भवता विना मृगदृशः शुकावली
कटुभाषिणी भवति मञ्जुभाषिणी।।३।।

इन्दुं निन्दति चन्दनं न मनुते मन्दानिलं नेक्षते
कुन्दं नाद्रियते मरकन्दलिते धत्तेऽरविन्दे रतिम्।
नैवानन्दति कन्दलं न रमते माकन्दवृन्दे मनः
संधत्ते न च नन्दने नगसुता कन्दर्पबन्दीकृता।।४।।

।। देशीवराटीरागे द्रुतताले ।।

प्रभो पाहि कान्तां भृङ्गनिभलोलदलकान्ताम्।
असमसाहसरसिककुसुमसायकविशिखसन्ततनितान्तहतितान्ताम् ।।
।। ध्रुवपदम् ।।

सा निरशना विविधविषयविरतं मनो मौनेन भवति कलयन्ती।
सन्ततं जपति शिवनाम तव संगतिं तपसैव पुनरभिलषन्ती।।1।।

भुवनगुरुरपि घनकुचद्वयनिरन्तरे वससि सततं हृदि तदीये।
सा विशालतरेऽपि तव न जात्वपि वसति कृशतनुरपीति शिव दूये।।2।।

तद्वदनरदनकचनिचयवचनैर्जिता इन्दुकुन्दभ्रमरकीराः।
शिव तव वियोगविधुरामुमां व्यथयन्ति हन्त हृदि निहितचिरवैराः।।3।।

तापयन्ति तां तपन इव खरकरः शशी, तव तु पुरतोऽमृतकरत्वम्।
वहति, न परं वपुषि चरितेऽपि कुटिलतायुतममुं हर परिहर त्वम्।।4।।

मलयपवनस्तवाभरणफणिगणगिलनचकित इव मुञ्चति भवन्तम्।
तां तु निजपत्त्रमृगनेत्रलक्ष्मीहरणकुपित इव बाधतेऽत्यन्तम्।।5।।

कमलदलदलनहिमवारिहिमबालुका न गणयति चिरविरहतापे।
सुरसरितमहह परिरब्धुमभिलषति सा सत्यपि सपत्नीकोपे।।6।।

तत्कुचभरो विगलदश्रुसिन्धुः शिरसि मलयजरजोभसितधारी।
धृतमदनदहनो निधित्सति भवन्नखरपदशशिकलां त्वदनुकारी॥7॥

कालयमतोऽपि भवताऽवितः कोऽपि मुनिबाल इति जगति प्रसिद्धम्।
कुसुमशरतोऽपि दयितां न तां पासि बत गद तया किमपराद्धम् ॥8॥

प्रेषय सुरव्रजमशेषमपि विरमति यदेष नाद्यापि बहुभाषी।
जोषमुत्थाय शशिभूष तद्रतिगृहं भूषय यदि त्वमभिलाषी ॥9॥

क्षितितलशशाङ्कवेङ्कटनृपानुमतकवितिरुमलमृदूक्तिरमणीयम्।
गीतमाभाति मूकाम्बिकालीवचनमुदितहरममृतदेशीयम् ॥10॥ ५॥

अत्र प्रतिभावशेनोक्तेषु दशसु पदेषु प्रौढा विचार्य पदद्वयं त्यजन्तु
(कवेरुक्तिः)

सन्तापोपशमाय येऽत्र विहिताः शीतोपचारव्रजाः
शम्भो, प्रत्युत दीपकाः, सुमधुराहारोऽपि तिक्तायते।
द्राङ् मलयानिलचन्द्रिकाः कटुविषायन्ते शिवायाः, परम्
शक्यो वारयितुं तवाधरसुधापानेन मारज्वरः॥६॥

शम्भो त्वं निटिलाक्षिवह्निवदमुं त्रैलोक्यदाहोद्यतं
रुन्त्से तद्विरहानलं, नगसुतानेत्राम्बुपूराम्बुधिः।
सोऽप्येनं भुवनप्लवोद्यतमिति स्पष्टं मिथस्तत्तयोः
और्वाग्न्यर्णवयोरिव प्रधनतो मन्ये जगज्जीवति ॥७॥

वहुभाषिणीयमिति मास्म कृथा हृदि सर्ववित्त्वमसि शैलभुवः।
विरहे प्रवृत्तमखिलं कथितुं प्रमिताक्षरैव हि मदुक्तिरियम् ॥८॥

भीरुं तामवलम्ब्य शम्बररिपुस्त्वय्याक्रमाद् विक्रमं
यत् संदर्श्य पुराङ्गभङ्गमगमत् तेनातिदूनोऽधुना।
धीरं त्वामवलम्ब्य शम्बसदृशैर्विध्यन् कलम्बैरुमां
गर्जत्यूर्जितभेदशक्तिरबला बाला कथं जीवतु ॥९॥

म्लाना भानोरिव खरकरैरह्नि शीतांशुलेखा
दैवाद् दावोद्भवशिखिशिखास्फालिता मालतीव।
खिन्ना स्विन्ना हिमकरकरैर्घोरमारज्वरार्ता
मन्दाक्रान्ता तव हृदि न सा, हन्त, चिन्तां तनोति ॥१०॥

स्वामिन् कामरिपो रिपोरपि दयादात्री दशामीदृशी-
माप्तामद्रिसुतां न यद्यपि तव त्रातुं कृपा विद्यते।
भा भूत्, किन्तु मनोभवं भवदरिं बद्धप्रतिज्ञं शिवां
हन्तुं वीतमदं विधित्सुरसि चेदेतावता पाहि ताम् ॥११॥

इत्थं चित्तं हरन्ती निरुपमममृतं श्रोत्रपात्रे किरन्ती
कम्पं सम्पादयन्ती स्वगतगिरिसुताभावमावेदयन्ती।
रोमाण्यामोदयन्ती स्वगतगिरिसुताभावमावेदयन्ती
श्रुत्वा सूक्तिं जयाया विभुरपि समभूत् संभृतानन्दसान्द्रः ॥१२॥

प्रेषयित्वा सुरान् शीघ्रमायास्यामि प्रसादितुम्।
देवीं निवेदयेत्युक्ता शम्भुना साऽवदत् सुरान् ॥१३॥

यूयं तारकविह्वला बुधवरा जाता बताद्या बुधाः
सर्वज्ञे करुणाम्बुधाविह शिवे विज्ञापयन्तो मुहुः।
यत्कालं बहलं निनीषथ वृथा तूर्ष्णीं प्रयातात्मभूः
कार्ये वः प्रतिभूरितः प्रभृति चेद्यत्नं न कुर्याद् विभुः॥१४॥

सव्यङ्ग्यमेवममिधाय सुरेषु लज्जा-
नम्रेषु सस्मितमुखेन शिवेन दत्ताम्।
सा पारिजातकुसुमस्रजमाप्य हृष्टा
गत्वा ससंभ्रममुमामिति वाचमूचे॥१५॥

॥ गुर्जरीरागे प्रतिमन्द्रताले॥

*शैलजे शैलजे शम्भुरुपैति स ते सदनम्।*
॥ ध्रुवपदम्॥

*जननं तव सुकृतमविकलम्।*
*साधुफलितमसावधुना खलु सकलम्॥1॥*

*भवभुजयुगकवचावृतकाया।*
*भवविफलितमदनास्त्रनिकाया॥2॥*

*हरपरिरम्भरसेन हताशम्॥*
*शमय हृदयगतमदनहुताशम्॥3॥*

*मदनमहाग्रहभयहरतन्त्रम्।*
*धारय हरनखलेखनयन्त्रम्॥4॥*

*किमिति लुठसि बत किसलयशयने।*
*विहर हरोरसिकुवलयनयने॥5॥*

*रतिकलिनतशिवमौलिकलापम्।*
*प्रहर पदेन विधुं कृततापम्॥6॥*

*स्मरशरविषधरविषहरमेनम्।*
*रसय हराधरममृतसमानम्॥7॥*

*वेंकटनृपनुततिरुमलकृतिना।*
*गीतमकारि कुकविगिरिपविना॥8॥ १६ ॥*

कामं कूजतु कोकिला, मधुकृतां पुञ्जोऽपि गुञ्जत्वलं
नित्यं नृत्यतु बर्हिणः स च सदा मन्दानिलः स्पन्दताम्।
वर्तन्तामखिलर्तवोऽप्युपवने राकायतां शर्वरी
शर्वोऽप्यम्ब यदालयं प्रति तवायाति प्रियः संप्रति॥१७॥

।। इति श्रीमन्महावराहेत्यादि गीतगौरीवरे सखीमुखेन
नायकाग्रे देवीविरहावस्थाकथनस्य, नायिकाग्रे
प्रियागमनाशंसनस्य वर्णनं
नाम नवमः सर्गः।।

## ।। अथ दशमः सर्गः ।।

तद्वाक्चन्द्रिकया सुधामधुरया हर्षाम्बुधिर्वर्धतां
देव्या नेत्रनवोत्पलं विकसतु श्वासानिलः शीततु।
तापः शाम्यतु निर्भरं पुलकिता तन्वी तनुः कम्पतां
युक्तं चित्रमिदं तु यत्समधिकां लक्ष्मीं मुखाब्जं दधौ ।।१ ।।

व्याधूतपद्मपटला चटुलालकान्ता
म्लानप्रवालशयनादुदतिष्ठदम्बा।
क्षिप्ताम्बुजा चलदलिप्रकरोन्मदेव
कन्दर्पराजतरुणी कलुषात्तटाकात् ।।२ ।।

लावण्याम्बुनिधिः स्वभावसुरभिः सेयं त्रिलोकीलसत्-
कान्तानां तिलकायितोत्पललसन्नेत्रा प्रवालाधरा।
स्नानालेपनचित्रकाञ्जनरसालक्तैः किमस्याः, परं
लोकाचारविलङ्घनं न वरमित्याल्योऽल्पभूषां व्यधुः ।।३ ।।

।। मालव-गौडरागे निस्सारकताले ।।

*सा रुरुचे संधृतवेषा शैलसुता।*
।। ध्रुवपदम् ।।

*सुरभिविशदसलिलाप्लुतकाया।*
*परिधृततनुतरवरकौशेया ।।1 ।।*

*सुरतरुकुसुमनिगुम्फितकाला-*
*गुरुवरधूपितकुन्तलजाला ।।2 ।।*

चन्दनतिलकविराजितभाला।
सौन्दरनासामणिधृत खेला ॥3॥

सदमलकुण्डलललितकपोला।
वदनरुचिभिरनुमितताम्बूला ॥4॥

अञ्जितकञ्जदलायदनेत्रा।
मञ्जुलकुंकुमरञ्जितगात्रा ॥5॥

गुरुकुचतटघटितामलहारा।
सरसचरणधृतमणिमञ्जीरा ॥6॥

इतरजनार्पितकान्तिभराणां ।।
प्रतिददती रुचिमाभरणानाम् ॥7॥

वेंकटनृपनुततिरुमलगीतम्।
शंकरललनालंकृतपूतम् ॥8॥४॥

भूमीभृद् भुवि तत्र कामनृपतेर्या राजधानी प्रिया
तस्याः काञ्चन शालितामकलयत् काञ्ची समन्तात् तता।
किङ्किण्यः स्म वहन्ति तत्प्रहरिकाघण्टावलीसंपदं
तत्रत्या मणयोऽपिरेजुरभितो दीप्ताः प्रदीपा इव॥५॥

अथ कुसुमविकीर्णे साधु सर्वर्त्तुपूर्णे
तदुपवनविभागे सारसौरभ्यपूगे।

विहितममलरत्ने विश्वकर्मप्रयत्नैः -
भुवनममलभाभिर्भूषयद् विस्तृताभिः ॥६ ॥

कृतमृगमदलेपं कल्पितोदारधूपं
वहदमलवितानं बद्धमालाप्रतानम्।
स्फुरदुरुमणिदीपं स्मेरशय्याकलापं
बहलसुखनिधानं भूरिवृत्तोपधानम् ॥७ ॥

शुभपरिमलपूर्णैः संपुटैश्चारुवर्णैः
पठितमणितभङ्गैः पञ्जरस्थैर्विहङ्गैः।
न विहितपरखेदैर्नाडिकायन्त्रभेदैः
सहितमखिलभोगैः साधु तत्कालयोग्यैः ॥८ ॥

वीणावेणुव्यजनमुकुरस्रग्गलन्त्यक्षसारी
नानागन्धाभरणगुटिकावीटिकादिप्रदानाम्।
तत्तद्वेलाप्रकृतिकरणाच्चेतनभ्रान्तिदानां
श्रेण्या व्याप्तं शयनमभितः सूत्रपाञ्चालिकानाम् ॥९ ॥

नानाबन्धनखाङ्कचुम्बनघनाश्लेषाधरोष्ठग्रह-
भ्रूभंगेक्षणकुञ्चिताङ्गुलिकरन्यासाङ्घ्रिघातादिषु।
प्रौढिं मुग्धमृगीदृशां प्रकटितुं शिक्षागुरुत्वं गताः।
सौवर्णीर्विलसद्विटंकघटिताः सत्सालभंजीर्दधत् ॥१० ॥

भारत्यां द्रुहिणस्य गौतममुनेर्दारेषु जम्भद्विष-
स्तारायां रजनीपतेर्मुरजितो राधादिगोपीजने।

उन्मर्यादिमनोजशौर्यपिशुनायाश्चित्रकेलीकथा -
श्चित्रे ताभिरलंकृतं गिरिसुता क्रीडागृहं प्राविशत् ॥११॥

सा तत्रानल्पकल्पद्रु-पुष्पाकलिततल्पभाक्।
निर्विकल्पान् सुधाकल्पान् संकल्पान् समकल्पयत् ॥१२॥

तावद्भावभवोग्रबाणविदलद्भावो भवानीपतिः
देवान् श्रीवरवारिजोद्भवमुखान् विज्ञापनापालनैः।
तद्वैवाहिकपारितोषिकयुतैस्तुष्टान् यथार्हं शिरः-
कम्पाभाषणसुस्मितेक्षणमुखैः पादानतान् प्राहिणोत् ॥१३॥

उत्थायाथ ससंभ्रमं प्रणमतस्तांस्तान् गणानीक्षणैः
क्षोणीभृत्यतिकल्पितोपचरणं स्वीकर्तुमाज्ञापयत्।
गत्वान्तः सुचिरोपवेशजनितं नेष्यामि खेदं क्षणाद्
इत्युत्कानुमतो हरो हिमवतोत्तस्थौ रणद्भूषणः ॥१४॥

प्रियानिकेतं प्रति संप्रयातः परम्परीतः परिचारिकाभिः।
चिरागतेनागसि मय्युमा किं करिष्यतीत्याप दुरन्तचिन्ताम् ॥१५॥

॥ वसन्तरागे गुर्जरीरागे एकतालीताले ॥

*किं करिष्यसि सा।*
*चिरयति मयि विरहविरसा॥*

॥ ध्रुवपदम् ॥

संप्रति मय्यति विनिहितनेत्रा
मामभियास्यति पुलकितगात्रा ॥1॥

परिजनकथितनिजागमना वा।
सुतनुरुदास्यति कलुषितभावा ॥2॥

मदुरसि विनिहितघनकुचकुम्भा।
मां मदयिष्यति कृतपरिरम्भा ॥3॥

निकटगते वञ्चितपरिरम्भा।
मयि विघटिष्यति कल्पितदम्भा ॥4॥

मम नख-मुख-हतिविकसितवदना।
पश्यति मदधरमुज्ज्वलमदना ॥5॥

भृकुटिकुटिलनिटिलाऽनुनयन्तम्॥
मां प्रति वक्ष्यति परुषमनन्तम् ॥6॥

निजकरधृतकरमुत्सुकनयनम्॥
नेष्यति मामथ रतिगृहशयनम् ॥7॥

वेङ्कटनृपनयनेङ्गितजातम्॥
शृणुत बुधास्तिरुमलकविगीतम् ॥8॥ १६॥

त्वयि गतदय सत्यं मत्प्रसादस्तदा स्याद्
यदि विधुकलया स्यादम्बुजस्यानुबन्धः।
इति यदि कथयेत् सा रोषिता, तत्पदाब्ज-
सुघटितमुकुटेन्दोर्नैव मे दुष्करं तत् ॥१७॥

॥ इति श्रीमन्महावराहेत्यादिगीतगौरीवरे
वासकसज्जिवदलंकरणस्य आगच्छतो
नायकस्य नायिकाकोपप्रसाद-
चिन्ता-वितर्कस्य च वर्णनं
नाम दशमः सर्गः॥

## ॥ अथ एकादशः सर्गः ॥

इत्थं चिन्ताभराक्रान्तमन्तकान्तकमागता।
तद्विलम्बेन कुपिता काचिदूचे शिवासखी ॥१॥

व्रज पुनरपि रम्भानृत्तसंभावनायै
किमिह शिव तवात्र प्रेयसी यत्र नास्ति।
तप-तपनकरोच्चैः शोषितायां लतायां
कथय किमुपकुर्यात् प्रावृषेण्यः पयोदः ॥२॥

श्रीशैलःस्तनमण्डलः स च महाकालः कचानां चयो
वक्त्रश्रीरलकाञ्चिता प्रविलसत्काञ्चीनितम्बस्थली।
गोकर्णः स्फुटमेव रोमलतिका किञ्चाविमुक्तं भवत्-
प्रेम्णाऽस्या हृदयं, तथापि शिव ते चित्रं न सा प्रेयसी ॥३॥

॥ देशावरागे। एकतालीताले रूपके वा ॥

*शिव, सा भवते न हि रोचते*
॥ ध्रुवपदम् ॥

*स्मरशरमूर्तिरुमा प्रवराय।*
*नयनदहनहुतकुसुमशराय ॥1॥*

*विविधविषयरसिका निपुणाय।*
*प्रकटसमाधिविजितकरणाय ॥2॥*

*करिवरकुम्भकुचा परुषाय।*
*प्रबलगजासुरकृतरोषाय ॥3॥*

*अमृतरसवदधरा वितृषाय*
*प्रेमनिपीतपयोधिविषाय ॥4॥*

*चकितहरिणनयना रुचिराय।*
*त्रिजगदशननिटिलाक्षिधराय ॥5॥*

*नवसरसिजसुरभिः कुशलाय।*
*प्रियकनकद्रुमकुसुमकुलाय ॥6॥*

*विविधविलासनिधिः सुमुखाय*
*भृङ्गिविकटनटनैकसुखाय ॥7॥*

*वेंकटनृपवरकविरचितानि।*
*शृणु हरनिन्दास्तुतिभणितानि ॥8॥ ४॥*

त्वं शीतांशुकलाधरः स्मररिपो सा पूर्णचन्द्रानना
त्वं वृद्धोक्षमधिष्ठितः पशुपते सा सन्मृगेन्द्राश्रया।
त्वं भिक्षान्नचरोऽसि सा क्षितिभृतां पत्युः सुता सादरा
त्वामाकारयति त्वमप्यगणयन्नायासि शूलिन्नहो ॥५॥

रुद्रः स्थाणुः पशुपतिरजो भीम उग्रोऽथ शूली
कामारातिर्विषमनयनो भूतनाथः कपाली।
योग्याः संज्ञा इति तव; शिवः शंकरः, सर्ववेदी,
शंभुर्मृत्युञ्जय इति शिवाक्लेशिनस्ते निरर्थाः ॥६॥

सेयं प्रसूनसुकुमारतनुः कठोर-
कन्दर्प वज्रविशिखान् सहते कथं वा।
वाणीव कोमलतरा सुकवेः सरोष-
दुस्तार्किकप्रकरकर्कशतर्कवादान् ॥७॥

इत्थं समाकर्ण्य स कर्णशल्यं
तदीरितं मारशरौघदीर्णः।
तामेव देवीं सहसा दिदृक्षु-
र्विवेश साशो विरहालयं तत् ॥८॥

अथ स तत्र पुरो न विलोकयन् कुलधराधरनायकनन्दिनीम्।
अघहरः स्मरतामपि शंकरः कमपि तापमवाप सुदुस्सहम् ॥९॥

॥ मालवरागे, एकतालीताले ॥

*गिरिशे कौतुकादुपयाते।*
*गिरितनयानवलोकनसंभवघनतरतापपरीते ॥*

॥ ध्रुवपदम् ॥

*अतनुतरातनुहुतवहधूम्रित तनुतरतनुकौशेयम् ।।*
*परिददृशे पुनरपि धृतमिव गजचर्म निजं परिधेयम् ॥1॥*

*द्रवति विभूषणभुजगकुले घनतप्तमपास्य तदङ्गम्।*
*वदति तदालिजनो गिरिशं गिरिजाभयमुक्तभुजङ्गम् ॥2॥*

निटिलनयनदहनेन ददाह जगद् यदसावपि दाहम्।
प्राप तदा नहि मुञ्चति कर्म तदीश्वरमपि धृतदेहम् ॥3॥

नमति शिवे गिरिजामहमपि मा भूवमदःपदसङ्गा।
इत्यपरत्रगतेव विशुष्कजला ददृशे न हि गङ्गा ॥4॥

हृतनिजतनुमनलं प्रति मुञ्चति वरुणशरं स्मरराजे।
क्षुभितमिवालिकनयनमपि प्रचुराश्रुजलं प्रविरेजे ॥5॥

विरहिणि शूलिनि तापकरो विधुराप ततो बहुतापम्।
भर्तरि खेदकृतो हि कृशस्य विभौ तदमितमनुरूपम् ॥6॥

अगणितकमलभवाण्डभृदपि विभुरस्रमितोदयदेनम्
श्रममगमद्घननिश्वसितोऽस्ति न तद्गुरुविरहसमानम् ॥7॥

'कोटेकोलाहल'विरुदाभृद्वेङ्कटनृपकवितिरुमलगीतम्।
जयति जगति [धुतभवभावं] दयिताधरमधुसहजातम् ॥8॥ १०॥

पूर्वं सुपर्वसरिदम्बरतो निपत्य
या शम्भुमूर्धनि बभूव चिराय लीना।
सैवाश्रुपूरमिषतो निरगात् तदक्षि-
मार्गैस्त्रिभिस्त्रिपथगेत्यभिधां दधाना ॥११॥

स्वभावशुभ्रेष्वङ्गेषु विदधत् पिष्टवेषणम्।
शम्भोर्विरहपाण्डुत्वं कण्ठे प्राप कृतार्थताम् ॥१२॥

गौरीवियोगघनतप्ततनोः पुरारेः
पूर्णाब्जजाण्डविततिः प्रतिरोमकूपम्।
उद्दामदावशिखयाऽभिहतस्य भेजे
सात्म्यं फलैरलमुदुम्बरपादपस्य।।१३ ।।

गङ्गा शोषमगात्, करोटिविततिर्विस्फोटिता, विद्रुताः
सर्पाः, दृग्दहनोऽश्रुभिः प्रशमितः, कण्ठेगतः कालिमा।
पाण्डिम्नौज्झि, विगन्धि दग्धमजिनं द्रागित्यलं विक्रियां
गुप्तामप्यनयत् प्रभोर्विरहजस्तापोनुदेव्यास्ततः।। १४।।

॥ इति श्रीमन्महावराहेत्यादि गीतगौरीवरे
वरयात्रीकृतनायकोपालम्भ-
तद्विरहवर्णनम् नामैकादशः॥

## ॥ अथ द्वादशः सर्गः ॥

स्वेनानीय शिवावियोगशयनप्लुष्टानि पुष्पाणि तैः
स्पृष्टः प्राणसमाङ्गकैरुपगतस्तुष्टिं हरः किञ्चन।
प्रत्यग्रैः परिचारिकाजनसमानीतैस्तु धाराम्बुना
सिक्तैश्चित्रमवाप तापशमनैस्तापप्रकोपं परम् ॥१॥

गर्जद्दुर्जयमारघोरशरजां दृष्ट्वा दशां तादृशीं
दुर्वारां शिशिरोपचारनिकरैः सख्यातिसंत्रस्तया।
धैर्यं धारय देव, मामनुसरान्वेष्या च मूकाम्बिका
इत्युक्त्वा गमितः शनैरुपवनं तप्तो हरः प्राह ताम् ॥२॥

॥ गुर्जरीरागे एकतालीताले रूपकताले वा ॥

*विजये सहसा दर्शय मे।*
*दयितां नुतां गिरिसुताम् ॥*
॥ पल्लव ॥

*वेद्मि कृतान्तादपि भुवनान्तादपि मधुमति दुःसहम्।*
*यस्य हि पुरतो भवितुं चकितो यममदहरणोऽप्यहम् ॥1॥*

*मलयसमीरं विषतो घोरं कलयति विषयी ध्रुवम्।*
*गलधृतगरलोऽप्यहमति तरलो विसरति यदिह भवम् ॥2॥*

*स्मृतनिजवैरो निष्प्रतिकारो वितनुरति दुनोति माम्।*
*मयि हृतकरुणां निरुपमसुगुणां तदधिदेवतामुमाम् ॥3॥*

*सुरगिरिचापं मुररिपुरोपं मामपि समयादयम्।*
*ऐक्षवचापः सरसिजरोपः प्रहरति बत निर्दयम् ॥4॥*

अपि शिरसि धृतो विधुरतिमदतो जनयति मम वेदनाम्।
तदिममखर्वं रचितुमगर्वं जितहिमकिरणाननाम् ॥5॥

धुरि सुरभीणामपि नः प्राणानिव कलयति काञ्चनम्॥
इति मयि कोपं दधदिव तापं सृजति कुसुमकुलं घनम् ॥6॥

मधुकरतरुणो गीतमकरुणो जनयति श्रुतिभेदिकाम्॥
घनमधुमत्तस्त्रसति न मत्तः चम्पकशुभनासिकाम् ॥7॥

विनयकलापं वेङ्कटभूपं सुखयतु बुधजीवनम्।
गुणमणिखचितं तिरुमलरचितं तिरुमलपरिदेवनम् ॥8॥ ३॥

श्रुत्वेन्दुर्निजमण्डलं परिहसद् देव्या मुखं दूरतो
दृप्तः पूर्णतया ससंभ्रममभिप्राप्तः क्रुधा लोहितः।
निर्दोषेण सदा चतुर्गुणकलाभ्राजिष्णुना निर्जितः
तेनासावयशः कलङ्कमिषतो धत्ते स्फुटं संप्रति ॥४॥

लोके मित्राण्यमित्रत्वं प्रयान्ति व्यसनागमे।
तापयन् मामित्रोऽपि चित्रं मित्रायते शशी ॥५॥

मुग्धे ममार्तिमपहर्तुमना नवीना-
मेनां ममोरसि कुतो निदधासि मालाम्।
यां वीक्ष्य दक्षिणसमीरण एष शेष-
भ्रान्त्यातिकोपकलितः कुरुतेऽद्य तापम् ॥६॥

'अस्य पद्यस्य युक्तिर्वेकटेन्द्रेण निरूपिता'

नूनं पुरा परिहृता शिरसोऽधुनैषा
रोषान्विता यदि जिघांसति केतकी माम्।
व्यापारिताः प्रथममन्तरतो विसृष्टाः
क्रूराः प्रभोरपि हि जातु सृजन्त्यरिष्टम् ॥७॥

भुक्त्वा मद्भूषणीभूतान् पन्नगानुद्धतः शिखी।
कूजाव्याजात्ततमुखो मामप्यद्य जिघत्सति ॥८॥

एवं शिवो बहु विलप्य विशुष्कतालु-
र्निन्दन्निजाममरतां नवमीमवस्थाम्।
सद्यो विशन्नथ ददर्श पुरः शिवायाः
सौधं, सुधाकरमिव क्षुधितश्चकोरः॥९॥

तमवेत्य शैलसुतयाऽन्वितं प्रियातनुगन्धबन्धुरसमीरसूचितः।
विजयां पुरो जिगमिषुं निरुध्य तां स्वयमेव पूर्वमविशत् सकौतुकः ॥१०॥

॥ रामकरीरागे यतिताले ॥

*स ददर्श धराधरनन्दिनीम्।*
*मानसनयनानन्दिनीम्॥*

॥ ध्रुवपदम् ॥

*विधुविधुरं तिमिरं मुखमवजितहिमकिरणं शरणंगतम्।*
*चिकुरकलापकलापमिषाद् दधर्ती सरसं चिरसंगतम्॥1॥*

*उदयशिखरिशिखरार्धसमुदितशशांकविशंकनदालिकाम्।*
*निजमुखसारसरसरसना सा चम्पकभयचलकालिकाम्॥2॥*

*भ्रूलतया जितराजितशम्बरहरकरशार्ङ्गमहामदाम्।*
*तरलतरङ्गतरङ्गितकुवलयवलयजिदीक्षणकामदाम्॥3॥*

*रागसमुद्रसमुद्भवविद्रुमसद्रुचिराधरशालिनीम्।*
*शम्बरघातननूतनखेटकनाटकनिपुणकपोलिनीम्॥4॥*

दाडिमबीजसमाजसदाकृतकदनरदनततिभूषिताम्।
मुखकमलगकमलजदयिताकरशुककलनिभभाषिताम् ॥5॥

कम्बुकदम्बविडम्बियशोनिभहारकयुतकन्धराम्।
रति-रतिनाथसनाथहृदालयकलशलसत्कुचबन्धुराम् ॥6॥

वरमृगनाभिसुरभिपयोधरतटतडिताभभुजालताम्।
त्रिवलिकलितललितोदरनिजघनजघनकृतेक्षणलोलताम् ॥7॥

अंगजमंगलतोरणरम्भास्तम्भनिभोरुयुगाञ्चिताम्।
बिसरुहकिसलयवलयहसननिभनखरुचिरुचिरपदाम् ॥8॥ ११॥

विनयविशंकटवेंङ्कटभुवनवरकवितिरुमलनिर्मितम्।
ललितपदं विपदं हरतां स्मरतां वचनं बुधसम्मितम् ॥१२॥

चन्द्रं मन्दिरतो बलात् प्रचलितं तत्कामिनी यामिनी।
पश्चादेत्यभुजद्वयेन यदि चेद् रुन्द्धे गृहीता बलात्॥
सा रात्रिस्तु लयेदुमाकचभरं चन्द्रः स देव्या मुखम्
तद्राहुद्वयमद्रिराजतनयाविभ्राजितभ्रूयुगम् ॥१३॥

प्रकटितरसभावं लोचनं शैलपुत्र्याः
कथमिव चपलत्वं नो भजेत प्रकृत्या।
कथमनिमिषलक्ष्मीं नो भजेत् पद्मजाता-
दधिकविभवमाप्तं विभ्रमत्तारकं च ॥१४॥

॥ इति श्रीमन्महावराहेत्यादि गीतगौरीवरे
नायकोद्यानप्रलापनायिकासंदर्शन-
वर्णनं नाम द्वादशः सर्गः ॥

## ॥ अथ त्रयोदशः सर्गः ॥

अथ मणिमयमञ्चादुत्थितां सम्भ्रमेण
प्रमदमदनलज्जासाध्वसानन्दसान्द्राम्।
उदितपुलककम्पस्तम्भपूर्णामपर्णा-
मुपचरितुमशक्तामालिलिङ्गे महेशः॥१॥

तस्मात् स्वेदजलार्द्रकुङ्कुमयुता विच्छिन्नहारावली-
मुक्ता भूमिगतास्तदालिषु तदा शङ्कामिमां चक्रिरे।
तद्वक्षोरुहकुम्भिकुम्भयुगलात् प्रौढप्रियोरस्थली-
गाढाघातविदारितान्निपतिता मुक्ताः सरक्ता इति॥२॥

उपविश्य स पर्यङ्के गाढं व्रीडाभयाकुलाम्।
गन्तुकामां सखीमध्यं करे धृत्वा न्यवेशयत्॥३॥

पश्यालिङ्ग पिबाधरं प्रियतमं प्रेमोक्तिभिः प्रीणये-
रित्थं प्रेरयति स्म तां मनसिजो मा मेति लज्जाऽन्यतः।
गाढं वारयति स्म, तत्र गिरिजा भेजे द्वितीयं मतं
स्त्रीणां विप्रतिषेधके हि बलवान् पक्षः स्ववर्गोदितः॥४॥

॥ विराटीरागे प्रतिमन्द्रताले ॥

*भज ममाङ्कं भामिनि विशङ्कम्।*
॥ ध्रुवपदम् ॥

*मम हृदयमदयमदनास्त्रदलितम्।*
*रचय तव कुचघुसृणलेपकलितम्॥1॥*

देहि मधुसममधरममृतमधुरम्।
पाहि मदनेषुहतिमोहविधुरम्॥2॥

तव नयनमधुपो ममास्यनलिने।
संचरतु घनजघनविजितपुलिने।॥3॥

अवसि शुकपिक शिखिरुतेन दग्धे
विसृज वचनामृतरसं विदग्धे॥4॥

मम कन्धरा तव सुबाहुकलिता।
भवतु तटि[डि]दञ्चितघनालिललिता॥5॥

व्रीडमपसारयोन्नमय वदनम्।
भवतु विधुरस्य विधुरस्य सदनम्॥6॥

हिमगिरिसुते सकरुणान्तरङ्गे।
शमय मम विरहतापमङ्गे॥7॥

वेङ्कटनृपपतिसुमतिकलितरचनम्।
जयति नरसाम्बिकातनयवचनम्॥8॥ ५॥

इत्युक्त्वा सहसा प्रगृह्य करयोरुद्धृत्य लज्जासरिन्-
मग्नां स्वाङ्कतटीं प्रियेण गमिता रेजेऽद्रिराजात्मजा।
किञ्चिन्मीलितदृग्विकीर्णवसनालेपप्रलक्ष्याङ्गका
स्वच्छाम्भःकणभूषिता पुलकिता सुव्यक्तकम्पाकुला॥६॥

प्रणयशपथमुक्तिव्याजसामोक्तिदाना-
नुनयविनयकोपाटोपसंतर्जनाद्यैः।

वशमनयदुपायैराशु देवीं तथेश-
स्तदनु किल यथा सा व्रीडितुं व्रीडमाप ॥७॥

॥ विराटीरागे रूपकताले ॥

घनसुखसदनं प्रमदनिधानं स्मरगुरुकथितविधानम्।
संबभूव विहृतं शिवयोश्चिरसञ्चितसुकृतनिदानम् ॥
॥ ध्रुवपदम् ॥

इनकरसंगतिहसितमुखीघनकण्टकिताङ्गभोगा।
साऽऽमोदं सरसं गिरिजाऽभजदम्बुजिनीव सरागा ॥ 1 ॥

सा रुरुचे पुरहरनिजभुजयुगवलयिततनुरगजाता।
रतिपतिचापलतेवसमर्पितमल्लीदामपरीता ॥ 2 ॥

हरमुखचुम्बिततन्मुखमरुचदिदं सदनं स्वसुरिष्टम्।
मम च विभोरिनवैरमपास्य नलिनमिव विधुनाऽऽश्लिष्टम् ॥ 3 ॥

गतनिगला(=डा) स्मरनृपकरिणीव बभौ हृतकाञ्चिरधीशा।
अथ हरकरपरिहृतवसनोज्ज्वलतदसिलतेव विकोशा ॥ 4 ॥

उद्गतचूर्णकधूलिरणन्मणिभूषणवाद्यकदम्बम्।
मणितहरध्वनिमुहुरितरेतरमुक्तकटाक्षकलम्बम् ॥ 5 ॥

खरनखरप्रहरणहतिकुङ्कुमकलितघर्मजलरक्तम्।
त्रुटदुरुहारमणिप्रमुदितसुरकरपरिहृतसुमयुक्तम् ॥ 6 ॥

अगणितखेदमपास्तविनयभयदयमगलितघनधैर्यम्।
अमिलषितात्मजयं समजनि श्रमरतिसमरं तदवार्यम् ॥ 7 ॥

*कलियुगकर्णवेङ्कटनृपलालिततिरुमलकविवरगीतम्।*
*दिशतु शिवानवसङ्गमुदितशिवः शिवं मतिजातम्॥ ४॥ ८॥*

रागो भूषयतिस्म नेत्रयुगलं तस्या निरस्ताञ्जनम्
त्रुट्यद्धासुरहारकं स्तनतटं स्वेदाम्बुमुक्तावलिः।
भालं निस्तिलकं प्रियाधरगतस्ताम्बूलरागोऽधरं
निर्लाक्षं दशनक्षतं, तनुमनालेपां नखाङ्का नवाः॥९॥

अन्योन्यैकभुजोपधानकलितौ बाह्वन्तरालिङ्गितौ
व्यग्रौ वीक्षणचुम्बनाधरसुधापानानुलापादिभिः।
संमिश्रोरुयुगौ रतान्तविलसन्निद्राशया तल्पगा-
वुद्दीप्ताङ्गभवौ वितेनतुरिमौ भूयो रतारम्भणम्॥१०॥

अर्धोन्मीलन्निमीलत्कमलकुमुदसद्गन्धसन्दोहबन्धु-
र्वेल्लन्मल्लीपरागप्रकरभरहतस्यन्दनो मन्दमन्दः।
देव्याश्चिच्छेद खेदं सरससमरतिश्रान्तशुद्धान्तकान्ता-
वक्षोजभ्राजमानश्रमजलकलिकाहारचोरः समीरः॥११॥

एषा किं विमुखीति, मा भज रुषं स्वामिन् भवत्सम्मुखी
श्रान्ताऽहं चिरमेकपार्श्वशयनादित्यालपन्ती शिवाम्।
अस्त्वेवं स्वदते ममापि तदिति द्राग्बाहुयुग्मेन ताम्
नीत्वा दक्षिणपक्षमक्षतपरीरम्भः शिवः पातु वः॥१२॥

ओजः प्रौढिसुवृत्तिकान्तिसमतामाधुर्यकान्त्यूर्जितो
ग्राम्यानर्थकनिष्ठुरोक्तिरहितो राजद्रसैकाश्रयः।
निर्दोषः शुभसर्वलक्षणयुतः सत्सन्धिराजत्पदो
गम्भीरोऽपि लसत्प्रसादकलितः शैवानुषङ्गोज्ज्वलः॥१३॥

कर्णश्राव्यविचित्रवृत्तकलितः श्लाघ्याखिलालंकृति-
र्नित्यं स्वार्थनितान्ततोषितबुधः प्रद्वेषिणामार्तिकृत्।
लोकानन्दकरः प्रसारितयशाः सोऽयं प्रबन्धश्चिरं
श्रीमद्वेङ्कटराजवद्विजयतां शम्भोः प्रसादाद् भुवि ॥१४॥

अब्दे भास्वति शालिवाहनशके भूमीन्दुबाणक्षमा-
संख्याशालिनि सर्वधारिणि जगद्वाञ्छाप्रदानोत्सुकाम्।
काशीवल्लभविश्वनाथमहिषीमुद्दिश्य मूकाम्बिकां
श्रीमद्वेङ्कटभूमिपालवचसा सोऽयं प्रबन्धोऽजनि ॥१५॥

॥ इति श्रीमन्महावराहदेहसम्भूततुङ्गभद्राङ्गनोपकण्ठमङ्गल-सूत्रायमाणशृङ्गपुरीमठाधीश - 'नारसिंह-भारती-यति' यतीन्द्रचारु-चरणारविन्दचञ्चरीकायमाण - सकलपण्डितमण्डलीमण्डनीभूत-साहित्यशिक्षाचार्य - श्रीविष्णुभट्टविद्वन्नन्दनेन कृत'कस्तूरिकामञ्जरी'-प्रमुखानेकनिबन्धनेन उभयकविकुलतिलकेन 'तिरुमल'भट्टेन विरचिते 'केलरि' पुराधिनायक - 'सदाशिवराय' नायक - कुमारजगदेकवीर-शङ्करभूपालतनुजस्य 'रामराजतिलका'नुजस्य सुकविजन-सुरभुजस्य 'अभिनवभोजराजस्य' श्री वेङ्कटाद्रिनायकमहाराजस्य मनोविनोदनकरे श्री'गीतगौरीवरे' नायिकाविश्रम्भण-संभोग 'घर्णनं नाम त्रयोदशः सर्गः॥

सत्यं साहित्यमुद्धर्तुं भोजे वेङ्कटराजताम्।
प्राप्ते तु कालिदासोऽयं कविस्तिरुमलाभिधः॥

॥ समाप्तं चेदं "गीतगौरीवरम्"
नाम रागकाव्यम् ॥